# SARASVATĪBHAVANA-STUDIES

*[ Vol. 29 ]*

# ŚRĀDDHAVIMARŚA

*by*


**Dr. UMĀŚAṄKARA TRIPĀṬHĪ**

Ex-Research officer
Research Institute,
Sampurnanand Sanskrit Vishvavidyalaya







Research Publication Supervisor

DR. BHĀGĪRATHA PRASĀDA TRIPĀṬHĪ 'VĀGĪŚA ŚĀSTRĪ'

Director, Research Institute,

Sampurnanand Sanskrit Vishvavidyalaya

VARANASI

1981

Published by—
Director, Research Institute,
Sampurnanand Sanskrit Vishvavidyalaya,
Varanasi.

[ This thesis has been approved for the 'Vidyāvāridhi' ( P-H.D. ) degree of Sampurnanand Sanskrit Vishvavidyalaya and has been published out of generous grant from University Grants Commission, New Delhi ]




Available at—
Sales Department,
Sampurnanand Sanskrit Vishvavidyalaya,
Varanasi–221002.

First Edition : 1000 Copies
Price : Rs.–22-00

Printed by—
**Gauri Shankara Press**
Varanasi

सरस्वतीभवन-अध्ययनमाला
[ २९ ]

# श्राद्धविमर्शः

लेखकः सम्पादकश्च
**डॉ० उमाशङ्करत्रिपाठी**
अनुसन्धानाधिकारिचरः
सम्पूर्णानन्दसंस्कृतविश्वविद्यालयस्य




अनुसन्धानप्रकाशनपर्यवेक्षकः
**डॉ० भागीरथप्रसादत्रिपाठी 'वागीशः शास्त्री'**
अनुसन्धानसंस्थाननिदेशकः,
सम्पूर्णानन्दसंस्कृतविश्वविद्यालयस्य

वाराणस्याम्
२०३८ तमे वैक्रमाब्दे १९०३ तमे शकाब्दे १९८१ तमे खैस्ताब्दे

प्रकाशकः—
निदेशकः, अनुसन्धानसंस्थानस्य,
सम्पूर्णानन्द-संस्कृत-विश्वविद्यालये
वाराणसी ।

[ गवेषणाप्रबन्धोऽयं सम्पूर्णानन्दसंस्कृतविश्वविद्यालयेन 'विद्यावारिधिः' ( पी-एच्० डी० ) इत्युपाध्यर्थं स्वीकृतः, विश्वविद्यालयानुदानायोगतो लब्धेनार्थिकसाहाय्येन मुद्रापितश्च ]

प्राप्तिस्थानम्—
विक्रयविभागः,
सम्पूर्णानन्दसंस्कृतविश्वविद्यालयः
वाराणसी–२२१००२ ।

प्रथमं संस्करणम् : १००० प्रतिरूपाणि
मूल्यम् : २२–०० रूप्यकाणि

मुद्रकः—
गौरीशङ्कर प्रेस
वाराणसी ।

# प्रास्ताविकम्

पुनर्जन्मवादिषु धर्मेषु खलु श्राद्धकर्ममान्यता प्रकारान्तरेण विद्यत एव। वैदिकसंहितासु पितृयज्ञ-पितृदेवत्यादीनां शब्दानामुपलम्भाच्छ्राद्धनिर्देशो दृश्यते। बौधायनश्रौतसूत्रे (२,२:२१) वैदिकसंहितागतपितृयज्ञस्थाने पितृयजनमित्युक्तम्। इहैव पितृकर्मार्थे श्राद्धशब्दः प्रयुक्त इदम्प्रथमतया। ततः परं गृह्यसूत्रग्रन्थेषु तु सूल्बणं श्राद्धभोजन-श्राद्धमन्त्रादयः शब्दा दृक्पदवीमवतरन्ति। धर्मसूत्रग्रन्थेषु वै श्राद्धशय्यासनादि-श्राद्धसूतक-श्राद्धसूतकभोजनादिशब्दाः समासाद्यन्ते प्रयुक्ताः। एवं तावद् वैदिके वाङ्मये श्राद्धकर्म सुप्रतिष्ठितमासीदिति शक्यते व्याहर्तुम्।

वेदाङ्गेषु पिण्डक्रिया-पिण्डतोयप्रदायि-पिण्डदान-पिण्डपात-पिण्डपितृयज्ञ-पितृतर्पणादीनां पदानां दर्शनेन वैदिकसंहितागतश्राद्धविषयो नूनं तत्र विशकलितः।

वाल्मीकिरामायणमहाभारतयोः श्राद्धकर्म वैदिकवाङ्मयतः सुविशदं विव्रियते। तत्र वाल्मीकीये रामायणे (२,७७,१) दशाहे कृतशौचो नृपात्मजो द्वादशेऽहनि सम्प्राप्ते श्राद्धकर्माण्यकारयदिति सुस्पष्टं चित्रं श्राद्धस्य।

ततः परं स्मृतिपुराणादिषु विविधानि श्राद्धलक्षणानि व्याहृतानि। गवेषणाप्रबन्धस्यास्य रचयित्रा श्रीमदुमाशंकरत्रिपाठिना याज्ञवल्क्यस्मृति-श्राद्धविवेक-श्राद्धप्रकाश-ब्रह्मपुराणादिभ्यः श्राद्धलक्षणानि समुदाहृतानि। पुनस्तावद् हरिवंश-गरुड-मत्स्यादिपुराणोक्तो महिमा श्राद्धस्य दर्शितः। पितॄणां देवतात्वकोटिः, तेषां श्रेणयश्च दर्शिताः—अङ्गिरोवैरूपाथर्वभृग्वादय ऋग्वेद-संहितोदिताः।

श्रीत्रिपाठिना वैज्ञानिकमतमत्र गृहीतमित्यस्य ग्रन्थस्य नवीनं वैशिष्ट्यम्। जीवोत्पत्ति-प्रकारः, पुनर्जन्मसिद्धिः, मरणोत्तरम् आत्मनस्त्रिभिर्वा चतुर्भिर्मुहूर्त्तैर्यमद्वारात् स्वमृत्यु-गेहमागत्य समवस्थानम्, तत्र पिण्डजलादेः सत्त्वं सोममिच्छति भृशं क्षीणो जीवात्मेत्यादयो गूढा विषया विश्लेषिताः सन्ति।

जीवात्मा देहान्निर्गत्य पुनर्जन्मोपलभ्य वा चतुर्दशलोकानामन्यतममवश्यं यास्यतीति कृत्वा ब्रह्मपुराणकृतं चतुर्दशलोकवर्णनमिह वर्तते। तत्र सूर्यचन्द्रलोकयोः, सम्पूर्णनक्षत्रमण्डलस्य, बुधशुक्रमङ्गलबृहस्पतिग्रहाणां सप्तर्षिमण्डलस्य चावस्थितिः प्रत्यपादि। त्रैलोक्यस्य ध्रुव-महर्जन-तपो-भू-भुवःस्वर्लोकानां च वर्णनानन्तरं ब्रह्माण्डवर्णनं विहितम्। सर्वेषामुच्छ्रयप्रमाणं तावत् तालिकाद्वारा प्रदर्शितम्। तत्र यमपुरप्रमाणवर्णनम्, यमराजगृहव्यवस्थावर्णनं च गरुडवराह-पुराणाधारेण कृते। पर्यन्ते वैज्ञानिकदृष्ट्या यमलोकः शक्त्यागारत्वेन समाख्यातः। चित्रगुप्तस्य गृहवर्णनं स्थानपरिमाणं च स्वातन्त्र्येण विस्तरशो विहिते।

पुराणादीनां विविधानि वर्णनानि श्रीत्रिपाठिना वैज्ञानिकनिकषेण परीक्षितानि, स्थाने स्थाने च सारिणीयोजनेन ग्रन्थोऽतीवोपयोगितामानीतः। गवेषणाप्रबन्धोऽयं चतुर्भिरालोकै-र्देदीप्यते। प्रसङ्गतो भारताद् बहिर्वर्तिनां धर्मसम्प्रदायानां पुनर्जन्मश्राद्धादिविश्वासा निर्दर्शिताः। उक्ता वर्णना त्रिष्वालोकेषु परिपूर्तिमिता। मुख्यः श्राद्धविषयश्चतुर्थ आलोके

विस्तरश उपबृंहितः। श्राद्धस्य विधिकालयोः सूक्ष्मविवेचनम्, श्राद्धकर्तृकपुत्राणां लक्षणम्, श्राद्धे देशप्राशस्त्यम्, प्रशस्तब्राह्मणाः, निषिद्धब्राह्मणाश्च निर्वर्णिताः।

इत्थं तावद् श्रीत्रिपाठिना सर्व एव श्राद्धविषयाः सम्यग् विमृष्टा अस्मिन् गवेषणाप्रबन्धे। यद्यपि श्रीदत्तोपाध्यायविरचितौ श्राद्धकल्पः, पितृभक्तिरिति, वाचस्पतिप्रणीतः श्राद्धचिन्तामणिः, रुद्रधरविभावितश्च श्राद्धविवेक इति ग्रन्था विलसन्ति पूर्वत एव, तथापि सत्स्वप्येतेषु श्रीत्रिपाठिनेह श्राद्धविमर्शे श्लाघ्यो नूत्नः प्रयत्न आस्थितः। परीक्षकाणां संवेदनेन विषयस्य च दर्शनेन गवेषकस्यास्य परिश्रमो श्लाघनीयतमः। सोऽयं सम्पूर्णानन्दसंस्कृतविश्वविद्यालयस्य सरस्वतीभवन-अध्ययनमालाया एकोनत्रिंशप्रसूनतया विकचितो गवेषणाप्रबन्धो विद्वज्जनान् प्रह्लादयिष्यति, जिज्ञासुजनांश्चोपकरिष्यतीति मे विश्वासः।

एष गवेषणाप्रबन्धो विश्वविद्यालयानुदानायोगस्य वैत्तिकेन साहायकेन मुद्रित इति तत्रत्येभ्योऽधिकारिभ्यो विश्वविद्यालयपक्षतः साधुवादान् वितरन् विरमति

अक्षयनवम्याम्
२०३८ वैं०
( ६-११-८१ खी. भृगौ )

**भागीरथप्रसादत्रिपाठी 'वागीशः शास्त्री'**
निदेशकः
अनुसन्धानसंस्थानस्य

# भूमिका

सत्यं वद, धर्मं चरेत्यादिश्रुतिवाक्यैर्मानवानां सकलकर्मोपदेशात् तेषां किं कर्मेति विवक्षायां धर्मशास्त्रानूकूलमेव कर्म कार्यमिति समाधीयते। यतो हि धर्मशास्त्रे गर्भाधानादिजन्मसंस्कारमारभ्यान्तिमसंस्कारपर्यन्तानि ब्रह्मचर्य-गार्हस्थ्य-वानप्रस्थ-सन्न्यासाश्रमाणां सर्वाणि कर्माण्युक्तानि सन्ति। धर्मशास्त्रं च स्मृतिपदवाच्यम्। तथेङ्गितमादिमुनिना मनुना—

श्रुतिस्तु वेदो विज्ञेयो धर्मशास्त्रं तु वै स्मृतिः।
ते सर्वार्थेष्वमीमांस्ये ताभ्यां धर्मो हि निर्बभौ ॥ ( मनु० २।१० )

## श्रुतिस्मृती समानधर्मे

अर्थाद् वेद-धर्मशास्त्ररूपे ते श्रुतिस्मृती सर्वविधकर्मसु किञ्चिदप्यविचार्यैव सन्धार्ये, यतस्ताभ्यां धर्मः ( धर्मशास्त्रम्, न्यायरूपो भावो वा ) एव प्रकटितो विद्यते।

शब्दनित्त्यत्वात्, "शब्दगुणकमाकाशम्" इति न्यायदर्शने सिद्धान्तितत्वात्, ट्राञ्जिस्टरटेलीफोनादि-दूरातिदूरस्थध्वन्याकर्षकयन्त्रादिभिर्यत्र कुत्रापि स्थाने ध्वनेः ( शब्दस्य ) श्रावणप्रत्यक्षज्ञानाच्च मन्यते यदादिकालतो वेदस्याकाशे परमेश्वरेच्छाकृतत्वादपौरुषेयत्त्वम्। अत एव सूक्ष्मज्ञानसाहचर्यान्मुनिभिः श्रुतत्त्वाद्धि मानवानां सकलकर्मप्रेरक-वेदस्य श्रुतिरित्यपरसंज्ञाऽऽपतिता। एवमेव सिद्धयति यद् वेदप्रतिपाद्यानुकूलस्याकाशस्थधर्मशास्त्रस्यापि तस्यापौरुषेयस्य मुनिभिः स्मृतत्वात् स्मृतिरित्यपरनामाप्यापतितं विद्यते। अतः श्रुतिस्मृत्योः प्रतिपाद्यसमत्वादेव मनुस्मृतावुभावपि धर्मशास्त्रवेदौ धर्माविव कथितौ। तथा चाह मनुः—

श्रुतिद्वैधं तु यत्र स्यात् तत्र धर्मावुभौ स्मृतौ।
उभावपि हि तौ धर्मौ सम्यगुक्तौ मनीषिभिः ॥ इति। (मनु० २।१४)

धर्मशास्त्रमित्यस्य न्यायशासनमित्यर्थः। तथा चास्येत्थं व्युत्पत्तिः—ध्रियते धारणीक्रियते धारयति वा विश्वं यः, स धर्म इति।' तथैव 'धर्मो रक्षति रक्षितः' इत्याप्तवचनम्। 'धृञ् धारणे धातोः कर्मणि कर्तरि वा-१४५ अर्तिस्तु-सु-हु-सृ-धृ-क्षि-क्षु-भा-या-वा-पदि-यक्षि-नीभ्यो मन्-इत्युणादिसूत्रेण मन् प्रत्ययः। एवं च

'धर्मः' धार्यो धारको वा सम्पद्यते । धार्यधारकविषयश्च आचारो न्यायो वा । उक्तं चामरकोषे—

धर्माः पुण्य-यम-न्याय-स्वभावाचारसोमपाः ॥ इति । (अम० ३।३।१३९)

तथा च मेदिनी—

धर्मोऽस्त्री पुण्य आचारे स्वभावोपमयोः क्रतौ ।
अहिंसोपनिषन्न्याये ना धनुर्यमसोमपे ॥ इति । (मे० १०९।१६)

एवमेव शास्त्रशब्दव्युत्पत्तिश्चेत्थम्—

शास्ति (अनुशास्ति) मानवाचारादीनां शासनम् अनुशासनं वा करोति यत्, तच्छास्त्रम् । अनुपूर्वात् ''शासु अनुशिष्टौ'' धातोः कर्तरि–६०८ सर्वधातुभ्यः ष्ट्रन् (उ० ४।१५७) इत्युणादिसूत्रेण ष्ट्रन् प्रत्ययः । अतः शास्त्रपदेन शास्तृशासनकर्तृ इति वार्थो बोद्धव्यः । शास्त्रं च वेदवन्मुनिभिः श्रुतमेव नभसः । एवं हि वेदमूलकस्य ब्रह्मणो नपुंसकत्वात् श्रुतवस्तुनो नपुंसकत्वमेव वरमिति न्याय्यत्वात् 'श्रुतम्' पदेन यथा वेदस्य ग्रहणं भवति तथैव शास्त्रस्यापीति ।

तथोक्तममरकोषे—'श्रुतं शास्त्रावधृतयोः' ॥ इति । (अम० ३।३।७७)

तथा च मेदिनी—श्रुतमाकर्णिते शास्त्रे ॥ इति । (मे० ५९।६७)

अतः 'शास्त्रम्' इति पदेन 'शासनकर्तृ श्रुतवस्तु' विज्ञेयम् । शासनशब्दस्यापि 'शासनकर्तृ' इत्यर्थो बुध्यते । शास्ति अनेनेति व्युत्पत्तौ 'शासु अनुशिष्टौ' धातोः करणे 'करणाधिकरणयोश्च' (३।३।११७) इति सूत्रेण ल्युट्प्रत्यये शासनशब्दसिद्धिर्भवति । एवं च 'धर्मशास्त्रम्' इति पदस्य न्यायशास्तृन्यायशासनं वेत्यर्थो ज्ञातव्य इति ।

अतः श्रुतौ वा यः समानधर्मः कथितस्तत्पथमनुकुर्वन् जनः परमं श्रेयः समवाप्नुवंश्चोत्कृष्टसुखभाक् स्यात् । तथोक्तं च मनुस्मृतौ मनुना—

श्रुतिस्मृत्युदितं धर्ममनुतिष्ठन् हि मानवः ।
इह कीर्तिमवाप्नोति प्रेत्य चानुत्तमं सुखम् ॥ इति । (मनु० २।९)

**स्वधर्मनिर्णयः**

किं कर्तव्यम्, किं न कर्तव्यमिति विज्ञातुं मानवः स्वकर्म (स्वधर्मम्) चतुर्भिः प्रकारैर्विजानीयात् । तद् यथा—

(१) वेदवचनैः स्वधर्ममनुतिष्ठेत् ।

(२) वेदसमाभिः स्मृतिभिरनुकुर्यात् ।

(३) श्रेष्ठजनाचारानुकूलैः सदाचारैर्धर्मानुष्ठानं सन्धारयेत् ।

(४) स्वात्मतुष्टये यो धर्मः प्रियः स्यात्, तमेव स्मृतिवचनानुसारं समाचरेत् । समष्टावेतदेव धर्मलक्षणम्, येन स्वकर्मनिर्णयो भवितुमर्हति । उक्तं हि मनुना—

वेदः स्मृतिः सदाचारः स्वस्य च प्रियमात्मनः ।
एतच्चतुर्विधं प्राहुः साक्षाद् धर्मस्य लक्षणम् ॥ (मनु० २।१२)

स्मृतयश्च पद्यनिबद्धाः । ताश्च बह्वयः सन्ति । तत्र मनोर्याज्ञवल्क्यस्य च स्मृती सर्वोत्कृष्टे सम्मानिते । तत्रापि मनुस्मृतिः सर्वप्राचीना । याज्ञवल्क्यः स्वकृतौ मनुस्मृतिप्रमाण-विपरीतं नाचरितवान् किञ्चित् क्वचिच्च ।

मुख्यस्मृतिकाराश्च विंशतिः सन्ति । ते चेमे विज्ञेया याज्ञवल्क्यानुसारेण—

१–मनुः, २–अत्रिः, ३-विष्णुः, ४–हारीतः, ५–याज्ञवल्क्यः, ६–उशनाः, ७–अङ्गिराः, ८-यमः, ९–आपस्तम्बः, १०–संवर्तः, ११–कात्यायनः, १२–बृहस्पतिः, १३–पराशरः, १४–व्यासः, १५–शङ्खः, १६–लिखितः, १७–दक्षः, १८–गौतमः, १९–शातातपः, २०—वसिष्ठश्च । एते च सर्वे धर्मशास्त्रकाराः । ते चेत्थं वर्णिता याज्ञवल्क्यस्मृतौ आचाराध्याये—

मन्वत्रिविष्णुहारीतयाज्ञवल्क्योशनोऽङ्गिराः ।
यमापस्तम्बसंवर्ताः कात्यायनबृहस्पती ॥
पराशरव्यासशङ्खलिखिता दक्षगौतमौ ।
शातातपो वसिष्ठश्च धर्मशास्त्रप्रयोजकाः ॥ इति ।

(याज्ञ० आचा०श्लो० ४, ५)

**प्रबन्धस्यास्याऽऽलोकेषु विभाजनकारणम्**

एतेषु धर्मशास्त्रप्रवर्तकेषु मनुरादिमः सर्वोत्कृष्टो मतः स्मृतिकारः । महावैज्ञानिकस्य डा० एच्० काटनमहोदयस्य सिद्धान्तप्रत्यक्षीकरणेन तैजसपरमाणुनिष्पन्नस्य जीवात्मनः स्वयं प्रकाशत्वात्, तस्योपरि परब्रह्मप्रकाशसंपाताच्च स जीवात्मा प्रकाशरूप एव । तथा च ज्योतिः-समूहे सकलब्रह्माण्डसत्त्वात् समस्तलोकाः प्रकाशरूपा एव सन्ति । तथा चोपवर्णितं ब्रह्मवैवर्तपुराणे ब्रह्मखण्डे-

यत् श्रुतं व्यासवक्त्रेण ब्रह्मखण्डमनुत्तमम् ।
अज्ञानान्धतमोध्वंसि ज्ञानवर्त्मप्रदीपकम् ॥

ज्योतिः समूहं प्रलये पुरासीत् केवलं द्विज ।
सूर्यकोटिप्रभं नित्यमसंख्यविश्वकारणम् ॥
स्वेच्छामयस्य च विभोस्तज्ज्योतिरुज्वलं महत् ।
ज्योतिरभ्यन्तरे लोकत्रयमेव मनोहरम् ॥
तेषामुपरि गोलोकं नित्यमीश्वरवद् द्विज ।
त्रिकोटियोजनायामविस्तीर्णं मण्डलाकृति ॥
तेजः स्वरूपं सुमहद् रत्नभूमिमयं परम् ।
अदृश्यं योगिभिः स्वप्ने दृश्यं गम्यं च वैष्णवैः ॥

एवं च सकलब्रह्माण्डस्य प्रकाशरूपत्वमेवेत्यादाय प्रबन्धोऽयं चतुर्ष्वालोकेष्वेव निबद्धः। तत्र प्रथमालोकतश्चतुर्थालोकं यावदपेक्षितविषयाणां क्रमिकत्वाधारेणोपवर्णनं कृतं विद्यते। ते च विषया यथाक्रममालोकेषु वर्ण्यन्ते।

**प्रथमालोके**

श्राद्धविमर्शशब्दव्युत्पत्त्या सह श्राद्धपरिभाषा। पितॄणां देवतात्वं कुशप्रियत्वं च। श्राद्धप्राचीनतावर्णनेन सह श्राद्धमहत्त्वम्। अग्निकर्तृकमात्मनः पितृपार्श्वे यमपार्श्वे च नयनम्। पितॄणां विभिन्नश्रेणीविभजनम् अङ्गिरस्पितॄणां नवग्वदशग्वरूपविभजनं च। सप्तर्षीणां नवग्वदशग्वरूपपितृत्वम्। अङ्गिरः-संज्ञकपितॄणामग्निपुत्रत्वं स्वर्गपुत्रत्वं च। पितॄणां सोमप्रियत्वम्। अग्निकर्तृकमात्मनः सोमप्रियचन्द्रे प्रस्थापनम्। आत्मनो नित्यत्ववर्णनम्। शक्तिसंवलितब्रह्मणः शक्त्या सहैव जगत्कर्तृत्वप्रख्यापनम्। शक्तेर्विद्युत्स्वरूपत्वम्। महावैज्ञानिक-डा० एच्० काटनमहोदयकर्तृकं परमाणौ विद्युच्छक्तिप्रदर्शनम्। शुक्रशोणितयोः परमाणुविद्युत्सत्तासत्त्वादेव सन्ततेरुत्पत्तिवर्णनम्। श्राद्धीयसत्त्वसोमबलेनात्मनो हस्तपरिमितशरीरस्य यमालयगमनम्। साम्प्रदायिकं वैदेशिकं च श्राद्धवर्णनम्। बौद्ध-जैन-सिक्ख-यवन-ख्रीस्तीयसंस्कृतिषु श्राद्धप्रदर्शनम्। आत्मनो नित्यत्वादेव पुनर्जन्मसिद्धिवर्णनम्। मरणानन्तरं त्रिभिश्चतुर्भिर्वा मुहूर्तैर्यमद्वारादागत्यात्मनः पुनः स्वमृत्युगृहे स्थितिनिरूपणम्। सोमपरिचयप्रदर्शनम्। जीवात्मनः सबलत्वे निर्बलत्वे वा पुण्यं पापं च कारणम्। पुण्यस्य पापस्य च भागित्वं सर्वविधजातीनां समम्। शब्दब्रह्मज्ञानादेवात्मनो ब्रह्मसायुज्यप्रापणम्। शब्दनित्यत्वाद् वेदानामपौरुषेयत्वसिद्धिनिरूपणम्। श्रीदुर्गादेव्याः शब्दशक्तिस्वरूपत्ववर्णनमित्यादि सुष्ठु वर्णितम्।

**द्वितीयालोके**

समस्तलोकानां वर्णनम् । तत्र पृथिवीपरिमाणमाकाशपरिमाणं सप्तपाताल-परिमाणं च प्रदर्शितम् । गोलोक-वैकुण्ठपुर-शिवलोक-सूर्यलोक-चद्रलोकादि-वर्णनपुरःसरं क्रमशः सम्पूर्णनक्षत्रमण्डल-बुध-शुक्र-भौम-गुरु-शनिग्रहाणां सप्तर्षि-मण्डलस्य च वर्णनम् । ततश्च ध्रुवलोक-त्रैलोक्य-महर्लोक-जनःलोक-तपोलोक-सत्य-लोकादिवर्णनपुरस्सरं भूर्लोक-भुवर्लोक-स्वर्लोकादिसकलब्रह्माण्डवर्णनम् । सप्तमहा-लोकानामुच्छ्राय-कलनसूचीनिरूपणम् । यमपुरप्रमाणवर्णनम् । तत्र यमपुरस्थ-यमराजगृहवर्णनम् । वैज्ञानिकदृष्ट्या यमलोकः शक्त्यगारम् ( पावर-हाउस ) इति प्रदर्शितम् । ततश्चित्रगुप्तगृहवर्णनम् । वैज्ञानिकमतप्रदर्शनम् । जीवात्मनो यमपुर-गमनवर्णनम् । जीवात्मनो यमपुरं प्रति गमनसमयस्तत्तत्स्थानमाननिरूपणम् । प्रेतस्वरूवपर्णनम् । सौम्यपुरादारभ्य बहुभीतिपुरं यावत् षोडशपुरवर्णनपुरस्सरं यमपुरमुख्यद्वारगमनवर्णनम् । सौम्यपुरादीनां परिमाणानुक्रमणीप्रदर्शनम् । चतुर्दश-लोकानां मानचित्रनिरूपणम् । ततश्च सिद्धसिद्धान्तसंग्रहानुसारं देह एव चतुर्दश-लोकानां संस्थितिवर्णनादिभिर्द्वितीयालोकः समाप्तीक्रियते ।

**तृतीयालोके**

जीवोत्पत्तिप्रकारवर्णनम् । ततश्च पित्रादीनां पुत्रादित्वम्, पुत्रादीनां च पित्रादित्वं प्रदर्शितम् । देवयान-पितृयाणपथप्रदर्शनम् । जलतर्पणेन पञ्चाग्निषु पञ्चाहुतिदानाच्च पितॄणां सुखेनोत्पत्तिनिरूपणमिति वैशिष्ट्यावैशिष्ट्यक्रमेण जीवात्मजननप्रदर्शनपूर्वकस्तृतीयालोको वर्णितः ।

**चतुर्थालोके**

श्राद्धविधिप्रदर्शनम् । तत्र श्राद्धकर्तृ पुत्राणां लक्षणवर्णनम् । पार्वणश्राद्धकर्तृ-निरूपणम् । ततोऽपुत्रादेः श्राद्धकर्तारः । संगृहीतपुत्राणां ( दासीपुत्रादीनाम् ) एको-द्दिष्टस्य पार्वणश्राद्धस्य च करणेऽसमर्थत्वप्रदर्शनम् । श्राद्धस्य पञ्चभेदनिरूपणम् । गोष्ठीश्राद्धलक्षणवर्णनम् । आमश्राद्धवर्णनम् । शूद्रेभ्योऽपि वृषोत्सर्गनिर्देशनम् । आशिशोर्यौवनं यावद् वर्णितावस्थाभिर्मरणकृत्यवर्णनम् । श्राद्धकालनिर्णय-निरूपणम् । अधिमासे सपिण्डनस्य प्रकारद्वयनिरूपणम् । षोडशश्राद्धप्रदर्शनम् । तत्र मलिनमध्योत्तमानां त्रयाणां व षोडशश्राद्धानां वर्णनम् । त्रिपक्ष-सपिण्डनमास-श्राद्धानां वर्णनम् । षष्ठमासे सपिण्डनमासश्राद्धानां वर्णनम् । ततो नवममासे सपिण्डनमासश्राद्धानां वर्णनम् । शूद्राणां सपिण्डनविधिः । अशौचादिविघ्नपतिते श्राद्धविधिः । उपद्रवे मृतदिनविस्मृते वा एकोद्दिष्टमासिकश्राद्धविधिः । सपिण्डी-

करणे वैशिष्ट्यप्रदर्शनम् । पित्रोर्जीवितयोः, मातामह्यां च जीवत्यां पत्नीसपिण्डनप्रकारः । मातरि मृतायाम्, पितामह्यां प्रपितामह्यां च जीवत्योः, मातामहे चापि जीविते पत्न्याः सपिण्डीकरणप्रकारः । आवश्यकश्राद्धकालनिरूपणम् । अमावस्याः, तिस्रोऽष्टकाः, तिस्रोऽन्वष्टकाः, माघी पूर्णिमा, प्रौष्ठपद्यूर्ध्वकृष्णत्रयोदशी, व्रीहियवपाकौ, चेत्यादयः श्राद्धकालाः प्रदर्शिताः ।

ब्रह्मपुराणसम्मतानामावश्यकश्राद्धकालानामपि निर्देशनम् । चतुर्दश्यामपमृतकश्राद्धविवेचनम् । पार्वणश्राद्धसमयवर्णनम् । आश्विनकृष्णत्रयोदशीवैशिष्ट्यनिरूपणम् । यत्र केवला त्रयोदशी, केवला मघा वा, मघायुक्ता त्रयोदशी, गजच्छाया त्रयोदशी, व्यतीपातयोगा त्रयोदशी, चन्द्रसूर्यग्रहणत्रयोदशी वा पार्वणश्राद्धार्थं गृह्यते । सूर्यचन्द्रग्रहणयोः राहुदर्शनेऽपि पार्वणश्राद्धविधानम् । दिने समयविभागेन श्राद्धकालनिर्णयः, यत्र सङ्गव-मध्याह्नाऽपराह्ण-सायाह्न-सन्ध्याकालकालाः प्रदर्शिताः । रात्रौ, प्रातःकालीनसूर्योदयमुहूर्तद्वयकाले, सायाह्ने च श्राद्धाकरणीयता-निरूपणम् । त्रिरात्राशौचविधिः । पञ्चकमृत्यूद्धारवर्णनम् । कुटीचरस्य विरक्तस्य वा श्राद्धविधानम् । नारायणबलिनिरूपणम् । श्राद्धकर्तुर्भोजनकालनिर्णयः । श्राद्धे देशप्राशस्त्याप्राशस्त्यवर्णनम् । ब्राह्मणप्राशस्त्याप्राशस्त्यवर्णनम् । कुशानां प्राशस्त्यवर्णनम् । कुशाभावे प्रतिनिधिवर्णनम् । श्राद्धे तिलप्राशस्त्याप्राशस्त्यवर्णनम् । अर्घपात्रविवेचनम् । श्राद्धे गन्धप्राशस्त्याप्राशस्त्यवर्णनम् । श्राद्धे श्वेतपुष्पाणि विहितानि । निषिद्धानीतरश्वेतपुष्पाणीत्युक्त्वा चतुर्थालोकः समाप्तीक्रियते ।

भगवतोऽपारशक्तिसमवेतपरब्रह्मणो मायाप्रेरितेनात्मब्रह्मबलेनैवाऽत्र धर्मशास्त्रीयश्राद्धविषयकशोधप्रबन्धकृतौ १९६९ खृस्ताब्दीय-फरवरीमासे मन्मनः प्रवृत्तिर्जागरिताभूत् । ममैतादृक्संवृद्धावस्थायां योग्यतातिशयेनाप्युन्नतिसम्भवेत्तथेति सम्भावना स्याद्वा न वेत्येवं "न वेति विभाषा" सूत्रचरितार्थत्वं केन विधिना सम्भवेत्तथेति निराशाऽऽशङ्का रहसि मनः परमं समालोडितं कृतवती । कतिपयैर्ममात्मजनैर्मत्कृतिप्रवृत्तिनिषेधो विहितः । परमस्मिन् समये वर्तमानानुसन्धानसञ्चालकैः डॉ० भागीरथप्रसादत्रिपाठिमहोदयैरनेकविधोदाहरणादिभिः प्रत्येकावस्थायां योग्यतातिशयकृतिं बहुविधं समर्थ्य ममोक्तकृतिप्रवृत्तिर्दृढीकृतेति तेषामुपदेशं शिरोधार्य अस्यां श्राद्धविमर्शरूपशोधप्रबन्धकृतौ दृढनिश्चयः सन् शास्त्रीयसरण्या वैज्ञानिकसरण्या च जीवात्मनो नित्यत्वमाधारीकृत्य तैजसनानालोकेषु गन्तुकामस्य तस्यात्मनतैजसपरमाण्वन्तर्गतविद्युच्छक्तिरूपतामादाय विविधप्रमाणा-

न्वेषणकर्मणि संलीनोऽहं धर्मशास्त्रविभागाध्यक्षचराणां श्रीप्रेमवल्लभत्रिपाठिमहोदयानां निर्देशकत्वे सन्नद्धः ।

तत्र वाराणसेयसंस्कृत विश्वविद्यालयस्य साङ्ख्ययोगविभागाध्यापकैः मुरलीधरपाण्डेयमहोदयैरपि प्रबन्धरुपरेखामाख्याय शोधमिमं निबद्धं समारूढीकृतश्च बहुशः येषामप्याभारीभूतोऽहं तद्दिनादेव वेदोपनिषत् स्मृतिपुराणधर्मसूत्रव्याकरणदर्शनधर्मशास्त्रादिग्रन्थानां समुद्धरणपूर्वकं गभीरावलोकनं प्रारम्भीकृतवान् । यत्र वाराणसेयसंस्कृतविश्वविद्यालयीयसम्मानितप्राध्यापकैः डॉ० कालीप्रसादमिश्रमहाभागैर्दैहिनस्तैजसरुपत्वमनेकविधप्रमाणैः समर्थ्योपकारशतैः सम्भारितः । प्राचीनव्याकरणदर्शनागमविभागाध्यक्षैः डॉ० रामप्रसादत्रिपाठिमहोदयैरपि हृदयेनानुपमकृतिरेषा समर्थिता । वेदान्तविभागाध्क्षैः डॉ० देवस्वरूपमिश्रमहोदयैश्च एतत्प्रबन्धविषये मनस्तोषो बहुशः साह्लादीकृतः । एतेषां सर्वेषामनुग्रहसम्भारेण सम्भारितन्न विस्मरिष्यति मे हृदयं कदाचिदेतान् विदुषः । ततश्च महता प्रयासेन विबुधानां सम्यग्बोधायातिसरलया पद्धत्या जीवात्मगत्यवबोधनार्थमेतं श्राद्धविमर्शनामकं प्रबन्धमवतारितवान् । परमात्मन एव सर्वज्ञत्वात् स्वल्पमतेर्ममाप्यत्र क्वचित् स्खलनं सम्भवेत् चेत्तर्हि विपश्चिद्वरैः क्षम्यमिति ।

अस्य शोधप्रबन्धग्रन्थस्य प्रकाशनवेलायाम् आचार्यश्रीरामगोविन्दशुक्लमहोदयैर्यथाशक्यं महान् योगः कृतः । तथाऽऽचार्यश्रीपरमेश्वरपाण्डेयमहोदयैरपि प्रकाशनविधौ महत् सौष्ठवं विधत्तम् । प्रकाशनाधिकारि डॉ० हरिश्चन्द्रमणित्रिपाठिमहाभागैश्च जीवात्मनो नित्यत्वाच्छ्राद्धमहत्त्वाऽनभिज्ञजनानां हिताय सर्वविधसुखसमृद्धयर्थं च श्राद्धेषु तेषां सुप्रवृत्तिर्यथाशीघ्रं स्यादिति त्वरातिशयं विधाय ग्रन्थोऽयं सुप्राकाश्यं नीतः । अतश्चैते विद्वांसः कोटिकोटिधन्यवादार्हाः सन्तीति चेतः शिवप्रसादान्मम हृद्दहराकाशं भृशमाह्लादयतीत्येवं कृत्वेदानीं विरमते ।

वाराणस्यां<br>सर्वपैत्र्यमावास्यायाम्<br>वि० सं० २०३८

**उमाशङ्करत्रिपाठी**<br>अनुसन्धानाधिकारिचरः<br>सम्पूर्णानन्द संस्कृतविश्वविद्यालयस्य

# विषयानुक्रमणी

## प्रथमालोके

## द्वितीयालोके

# श्राद्धविमर्शः

## प्रथमालोकः

### अथ श्राद्धोपक्रमः

जीवात्मानं महात्मानं सच्चिदानन्दरूपिणम् ।
तामहं ब्रह्मशक्तिं च नित्यं वन्दे तदच्युतम् ॥
यत्परागसुसम्बद्धं जीवः प्राप बलं वपुः ।
देवान्नीरैः सदा पितॄन् तर्पयामि स्वमानसैः ॥

बहुकालाच्छ्राद्धविधानं जनैः शास्त्रोक्तप्रक्रियया पुरुषनिधनानन्तरं तस्यात्मनस्तृप्त्यर्थं क्रियते, कृत्वा च स्वयमपि संतृप्यते । परं चेदं श्राद्धं कार्यमकार्यं वेति प्रश्नवेलायां श्राद्धस्य, प्रासङ्गिकतदीयात्मनश्च विवेचनविषयक एव 'श्राद्धविमर्शः' नामकोऽयं शोधप्रबन्धः समुपस्थापितो विद्यते ।

'श्राद्धविमर्शः' पदेन किं गृह्यत इति चेदत्रोच्यते—महर्षिपाणिनिकृतस्य 'आतश्चोपसर्गे' ( ३।३।१०६ ) इति सूत्रस्योपरि 'श्रदन्तरोरुपसर्गवद् वृत्तिः' इति वार्त्तिकेन श्रद्धार्थकस्य 'श्रत्' इत्यव्ययपदस्योपसर्गत्वं सिद्धयति । अत एव 'आतश्चोपसर्गे' इति सूत्रेण श्रद्धानमिति विग्रहे श्रदित्युपसर्गपूर्वकाद् 'डुधाञ् धारणपोषणयोः' धातोरङ्प्रत्यये टापि च श्रद्धार्थिकेव श्रद्धेति रूपसिद्धिर्भवतीति ।

श्रद्धा अस्त्यस्मिन् दानकर्मणीति विग्रहे 'अर्श आदिभ्योऽच्' ( ५।२।१२७ ) सूत्रेणाज्विधानात् 'श्रद्धम्' इति रूपं जायते। श्रद्धमेव श्राद्धमिति विग्रहे श्रद्धशब्दात् 'प्रज्ञादिभ्यश्च' ( ५।४।३८ ) सूत्रेण स्वार्थेऽण्प्रत्यये श्रद्धापूर्वकं पितृकर्मेत्यर्थकं श्राद्धपदं समवतिष्ठते ।

यद्वा–श्रद्धा प्रयोजनमस्य पितृकर्मण इति विग्रहे श्रद्धाशब्दात् 'विशाखाषाढादण् मन्थदण्डयोः' ( ५।१।११० ) इति सूत्रस्योपरि 'चूडादिभ्य उपसंख्यानम्' इत्युल्लिखितं यद् वार्त्तिकं तच्छेखरकारमतेन 'व्युष्टादिभ्योऽण्' ( ५।१।९७ ) सूत्रस्योपर्यवधेयमिति । अतः श्रद्धायां यद् दीयते, कार्यम् ( पितृकार्यम् ) वेति विग्रहे उक्तवार्त्तिकेन अण्-प्रत्यये श्राद्धशब्दसिद्धिर्बोध्या ।

विमर्शनम्-विशेषेण आमर्शनं स्पर्शः ( भावार्थस्य स्पर्शो विचारो वा ) इति विग्रहे वि-पूर्वात् 'मृश आमर्शने' तौदादिकधातोर्भावे घञ्प्रत्यये 'विमर्शः' इति रूपस्य सिद्धौ 'विशिष्टविचारः' इत्यर्थो विस्फुटो भवति । अतः श्राद्धस्य श्रद्धापूर्वकस्य पितृकर्मणः, तथान्तर्गतत्वात् पञ्चभौतिकात् पिण्डान्निर्गतस्यात्मनश्चापि विमर्शः=

विशिष्टविचार इति 'श्राद्धविमर्शः' पदस्यार्थः संगृह्यते वैयाकरणैः। स्मृतिपुराणादिष्वपि श्राद्धशब्दस्य तथैवार्थः। श्राद्धं हि स्मृत्यादिषूक्तेषु संस्कारेष्वन्त्येष्टिसंस्कारोऽन्तिमः। तद् यथा—१. गर्भाधानम् ( ऋतुकाले ), २. पुंसवनम् ( गर्भचलनात् पूर्वम् ), ३. सीमन्तः ( गर्भस्य षष्ठेऽष्टमे वा मासि ), ४. जातकर्म ( जाते कुमारे ), ५. नामकरणम् ( राशिनामादि एकादशेऽहनि ), ६. निष्क्रमणम् ( जन्मनश्चतुर्थे मासि ), ७. अन्नप्राशनम् ( षष्ठे मासि ), ८. चूडाकरणम् ( यथाकुलाचारम् ), ९. उपनयनम् ( गर्भादष्टमे जन्मतोऽष्टमेऽब्दे वा ), १०. दण्डाजिनमौञ्जीबन्धनम् ( ब्रह्मचारिकाले, द्वितीयं जन्मेदम् ), ११. भिक्षाचरणम् ( ब्रह्मचर्यावस्थायाम् ), १२. वेदाध्ययनम् ( ब्रह्मचर्ये ), १३. केशान्तः ( द्वादशवर्षानन्तरं ब्रह्मचर्यं निधाय षोडशवर्षे वा रक्षितकेशानां कृन्तनं गोदानं च ), १४. तर्पणम् ( ब्रह्मयज्ञः—अध्यापनपूर्वकं सवेदाध्ययनम् पितृयज्ञश्च ), १५. विवाहः ( असगोत्रया, असमानप्रवरया, असपिण्डया, लक्षण्या कन्यया सह ), १६. अन्त्येष्टिसंस्कारः।[1]

एवं चान्तिमस्यान्त्येष्टिसंस्कारत्वादन्तिम-श्राद्धसंस्कारविमर्शनं क्रियत इति।

## स्मृतिपुराणादिषु श्राद्धपरिभाषा

**याज्ञवल्क्यस्मृतौ**— श्राद्धं नामादनीयस्य तत्स्थानीयस्य वा द्रव्यस्य प्रेतोद्देशेन श्रद्धया त्यागः[2]।

अर्थात् पितॄनुद्दिश्य ( तेषां कल्याणार्थम् ) तेभ्यः श्रद्धया भोज्यवस्तुदानम्, तत्सम्बन्धितद्रव्यत्यागो वा श्राद्धम्।

**श्राद्धविवेके**—श्राद्धं नाम वेदबोधितपात्रालम्भनपूर्वकप्रमीतपित्रादिदेवतोद्देश्यको द्रव्यत्यागविशेषः[3]।

अर्थात् वेदविहितः पितृकर्मणि पात्रप्रहरणपूर्वको मृतपित्रादीनां देवतात्वसम्पन्नानामुद्देशेन द्रव्यत्यागः श्राद्धम्।

**तथा च श्राद्धप्रकाशे**—अत्रापस्तम्बादिसकलवचनपर्यालोचनया प्रमीतमात्रोद्देश्यकान्नत्यागविशेषस्य ब्राह्मणाद्यधिकरणप्रतिपत्त्यङ्गकस्य श्राद्धपदार्थत्वं प्रतीयते[4]।

**ब्रह्मपुराणेऽपि**

देशे काले च पात्रे च श्रद्धया विधिना च यत्।
पितॄनुद्दिश्य विप्रेभ्यो दत्तं श्राद्धमुदाहृतम्॥

अर्थात् पितृकर्मयोग्यं यथास्थानम् यथाकालं यथापात्रं च विधिपूर्वकं श्रद्धया विप्रेभ्यो यद्दीयते तच्छ्राद्धम्।

---

१. मनु० २।१६, २७, २९-३०, ३४-३६, ४२, ६५ तथा ३।२, ४, ७०। याज्ञव० १-११-१२, १४, २८, ३४, ३६, ३९, ४१-५०, ५२। २. याज्ञव० १।२१७ मिताक्षरा। ३. श्रा० वि०, पृ० १। ४. श्रा० प्र० पृ०।

अथ ये केचन नास्तिकाः पितृद्वेष्टारः सन्ति, तेऽपि पितृषु देवतात्वाध्यारोपं कृत्वा तेषां केवलं स्तुतिं कुर्युरिति तान् प्रति पितृश्राद्धप्रवृत्त्यर्थं मेधातिथि-गोविन्द-राजयोरियमुक्तिः—

"पितृद्वेषान्नास्तिक्याद्वा यः पितृकर्मणि न प्रवर्तते तं प्रत्येतत्प्रवर्तनार्थं देवतात्वाध्यारोपेण पितॄणां स्तुतिवचनम् ।" इति ।

## अथेदानीं देवतात्वसम्पन्नाः पितर उच्यन्ते

श्राद्धे क्रियमाणे पितरस्त्रयः क्रमशो वसुरुद्रादित्यदेवतासमाना एव ध्यातव्याः । यतस्ते वसुरुद्रादित्यदेवाः पितृदेवाः सन्तः पितॄणां प्रतिनिधिस्वरूपा भवन्ति । उक्तं च मनुना[1]—

वसून् वदन्ति तु पितॄन् रुद्रांश्चैव पितामहान् ।
प्रपितामहांस्तथादित्याञ्श्रुतिरेषा सनातनी ॥

अयं भावः—पितृदेवास्त्रयो भवन्ति—वसुः, रुद्रः, आदित्यश्चेति । एते त्रयः पितृलोके पृथक् पृथग् देशेषु लिङ्गरूपेण तिष्ठन्ति । क्रमशः पूर्वस्मात् पूर्वस्माद् परः पर उच्चतरः ( ऊर्ध्वस्थानिकः ) प्रख्यापितो विद्यते । तथा च ऋग्वेदे निम्नमध्य-मोच्चाः पितर उक्ताः[2] —

उदीरतामवर उत् परास उन्मध्यमाः पितरः सोम्यासः ।
असुं य ईयुरवृका ऋतज्ञास्ते नोऽवन्तु पितरो हवेषु ॥
इदं पितृभ्यो नमो अस्त्वद्य ये पूर्वासो य उपरास ईयुः ।
ये पार्थिवे रजस्या निषत्ता ये वा नूनं सुवृजनासु विक्षु ॥

**अथ पित्रासनं कथ्यते**—पितॄणां कुशाः प्रियाः सन्तीति श्राद्धे आसनादिस्थानेषु कुशा एव प्रयुज्यन्ते । तथा च ऋग्वेदे[3] —

उपहूताः पितरः सोम्यासो बर्हिष्येषु निधिषु प्रियेषु ।
त आ गमन्तु त इह श्रुवन्त्वधि ब्रुवन्तु तेऽवन्त्वस्मान् ॥

## श्राद्धप्राचीनता

यथा मानवानां पिता मनुः प्राचीनस्तथैव श्राद्धमपि प्राचीनम् । तथा हि ऋग्वेदे[4] —

स पूर्व्यो महानां वेनः क्रतुभिरानजे ।
यस्य द्वारा मनुष्पिता देवेषु धिय आनजे ॥
ते नस्त्राध्वं तेऽवत त उ नौ अधि वोचत ।
मा नः पथः पित्र्यान्मानवादधि दूरं नैष्ट परावतः ॥[5]

---

१. मनु० ३।२८४ । २. ऋ० १०।१५।१-२ । ३. ऋ० १०।१५।५ । ४. ऋ० सं० ८।६३।१ । ५. ऋ० सं० ८।३०।३ ।

तथा च स्मृतिचन्द्रिकायाम्

आयुः पुत्रान् यशः स्वर्गं कीर्तिं पुष्टिं बलं श्रियः ।
पशून् सौख्यं धनं धान्यं प्राप्नुयात् पितृपूजनात् ।।[1]

तत्रैव स्मृतिचन्द्रिकायां सुमन्तुना वर्णितम् —

पित्र्यमायुष्यं स्वर्ग्यं यशस्यं पुष्टिकर्म च । इति ।

## श्राद्धमहत्ता

हरिवंशपुराणे[2]

श्राद्धे प्रतिष्ठितो लोकः श्राद्धे योगः प्रवर्तते ।
हन्त ते वर्तयिष्यामि श्राद्धस्य फलमुत्तमम् ।।
ब्रह्मदत्तेन यत् प्राप्तं सप्तज्ञातिषु भारत ।
तत एव हि धर्मस्य बुद्धिर्निर्वर्तते शनैः ।।
पीडयाऽप्यथ धर्मस्य कृते श्राद्धे पुराऽनघ ।
यत् प्राप्तं ब्राह्मणैः पूर्वं तन्निबोध महामते ।।
एवमेषाऽपि गौर्धर्मं प्राप्स्यते नात्र संशयः ।
पितॄनभ्यर्च्य धर्मेण नाधर्मोऽस्मान् भविष्यति ।।[3]

मनुनाप्युक्तम्[4]

ऋषयः पितरो देवा भूतान्यतिथयस्तथा ।
आशासते कुटुम्बिभ्यस्तेभ्यः कार्यं विजानता ।।
स्वाध्यायेनार्चयेतर्षीन् होमैर्देवान् यथाविधि ।
पितॄन् श्राद्धैश्च नॄनन्नैर्भूतानि बलिकर्मणा ।।
कुर्यादहरहः श्राद्धमन्नाद्येनोदकेन वा ।
पयोमूलफलैर्वापि पितृभ्यः प्रीतिमावहन् ।।

तथा च गरुडपुराणे

न काष्ठे विद्यते देवः शिलायां न कदाचन ।
भावे हि विद्यते देवस्तस्माद् भावं समाश्रयेत् ।।[5]
शीतवातातपहरं समीचीनं कुटीरकम् ।
कृत्वा विप्राय विदुषे प्रददाति कुटुम्बिने ।।
तिस्रः कोट्योऽर्धकोटी च नरः स्वर्गे महीयते ।
सा स्त्री मुदा च संशुद्धा मृतं पतिमनुव्रजेत् ।।[6]

---

१. स्मृ० च० पृ० ३३३ । २. हरिवं० प० १, २१।१-३। ३. हरिवं० प० १, २१-१२ ।
४. मनु० ३।८०।८२ । ५. ग० पु०, प्रे० क० २७।२९ । ६. ग० पु०, प्रे० क० २८।१३-१४ ।

मत्स्यपुराणेऽपि[1]

इदमूचुर्महाभागाः प्रसादशुभया गिरा ।
दिवि दिव्यशरीरेण यत् किञ्चित् क्रियते बुधैः ॥
तेनैव तत् कर्मफलं भुज्येत वरवर्णिनि ।
सद्यः फलन्ति कर्माणि देवत्वे प्रेत्य मानुषे ॥

तथा च विष्णुधर्मसूत्रे[2]

पितृलोकगतश्चान्नं श्राद्धे भुङ्क्ते स्वधासमम् ।
पितृलोकगतस्यास्य तस्माच्छ्राद्धं प्रयच्छत ॥
देवत्वे यातनास्थाने तिर्यग्योनौ तथैव च ।
मानुष्ये च तथाप्नोति श्राद्धं दत्तं स्वबान्धवैः ॥
प्रेतस्य श्राद्धकर्तुश्च पुष्टिः श्राद्धे कृते ध्रुवम् ।
तस्माच्छ्राद्धं सदा कार्यं शोकं कृत्वा निरर्थकम् ॥

अग्निरात्मानं पितृपार्श्वे नयति । तथा च मार्कण्डेयपुराणे[3]—

देहान्निर्गतात्मनो विभिन्नकार्यत्वम् । इति ।

अयं भावः—शरीराद् निर्गतात्मा पितृलोके स्वधया सह श्राद्धे प्रदत्त-भोजनपानादीनां रसास्वादनं करोति । स स्वर्गे, नरके, निम्नपशुयोन्यादौ, मानसदेहधारणे वा सर्वत्र बान्धवादिप्रदत्तभोज्यवस्तूनां सत्त्वांशं प्राप्नोति । अग्निः पितृपार्श्वे आहुत्यादीन्, सर्वान् सत्त्वविशेषांश्च नयति, यतः स सर्वान् पितृगणान् जानाति, यद्यपि स्ववंशजास्तान् नजानन्ति । तथा हि ऋग्वेदे[4]—

त्वमग्न ईलितो जातवेदोऽवाड्ढव्यानि सुरभीणि कृत्वी ।
प्रादाः पितृभ्यः स्वधया ते अक्षन्नद्धि त्वं देव प्रयता हवींषि ॥
ये चेह पितरो ये च नेह यांश्च विद्म याँ उ च न प्रविद्म ।
त्वं वेत्थ यति ते जातवेदः स्वधाभिर्यज्ञं सुकृतं जुषस्व ॥

गोत्राद्युच्चारणपूर्वकसाङ्कल्पिकेन विधिनोच्चारिता मन्त्रा अपि सर्वेषां पितॄणां परिचायका दत्तमन्नादिकं तत्तत्पितृपार्श्वे नयन्ति । तथोक्तं ब्रह्मपुराणे[5]—

यथा गोषु प्रभूतासु वत्सो विन्दति मातरम् ।
तथाऽन्नं तत्र विप्राणां जन्तुर्यत्रावतिष्ठते ॥
नाम गोत्रं च मन्त्राश्च दत्तमन्नं नयन्ति ते ।
अमी ये निधनं प्राप्तास्तृप्तिस्तानुपतिष्ठते ॥ इति ।

---

१. म० पु०, १४।११-१२ । २. वि० ध० २०।३४-३६ । ३. मा० पु० २३।४६-५१ ।
४. ऋ० १०।१५।१२।१३ । ५. ब्र० पु० २२०।१४१-१४२ ।

मनुष्यदेहे दग्धे सत्यग्निस्तमात्मानं पितृपार्श्वे नयति। स चात्मा क्रमशो यमं पितॄश्चाप्नोति। तथा हि ऋग्वेदे[१]—

मैनमग्ने विदहो माभिशोचो मास्य त्वचं चिक्षिपो मा शरीरम्।
यदा शृतं कृणवो जातवेदोऽथेमैनं प्र हिणुतात् पितृभ्यः॥
शृतं यदा करसि जातवेदोऽथेमैनं परि दत्तात् पितृभ्यः।
यदा गच्छात्यसुनीतिमेतामथा देवानां वशनीर्भवाति॥
पूषा त्वेतश्च्यावयतु प्र विद्वाननष्टपशुर्भुवनस्य गोपाः।
स त्वैतेभ्यः परि ददत् पितृभ्योऽग्निर्देवेभ्यः सुविदत्रियेभ्यः॥
अथर्ववेदे (१८।२।१०) तत्रापीत्थमेव वर्णितम्।

वायव्यशरीरेणात्मा यमपित्रादीनां समीपे यातीति ऋग्वेदे वर्णितम्[२]—

परेयिवांसं प्रवतो महीरनु बहुभ्यः पन्थामनुपस्पशानम्।
वैवस्वतं संगमनं जनानां यमं राजानं हविषा दुवस्य॥
सं गच्छस्व पितृभिः सं यमेनेष्टापूर्तेन परमे व्योमन्।
हित्वायावद्यं पुनरस्तमेहि सं गच्छस्व तन्वा सुवर्चाः॥[३]
ये अग्निदग्धा ये अनग्निदग्धा मध्ये दिवः स्वधया मादयन्ते।
तेभिः स्वराळसुनीतिमेतां यथावशं तन्वं कल्पयस्व॥[४]
अव सृज पुनरग्ने पितृभ्यो यस्त आहुतश्चरति स्वधाभिः।
आयुर्वसान उप वेतु शेषः सं गच्छतां तन्वा जातवेदः॥[५]

पितरो विभिन्नश्रेणीषु विभक्ताः सन्ति। यथा—अङ्गिरस्–वैरूप–अथर्वन्–भृगु–नवग्व–दशग्वरूपाः।

तथा च ऋग्वेदे[६]

अङ्गिरोभिरा गहि यज्ञियेभिर्यम वैरूपैरिह मादयस्व।
विवस्वन्तं हुवे यः पिता तेऽस्मिन् यज्ञे बर्हिष्या निषद्य॥
अङ्गिरसो नः पितरो नवग्वा अथर्वाणो भृगवः सोम्यासः।
तेषां वयं सुमतौ यज्ञियाना मपि भद्रे सौमनसे स्याम॥

अङ्गिरस्पितरः स्वयं भागद्वये नवग्व–दशग्वरूपे विभक्ताः। तथा च ऋग्वेदे[७]—

स सुष्टुभा स स्तुभा सप्तविप्रैः स्वरेणाद्रिं स्वर्यो नवग्वैः।
सरण्युभिः फलिगमिन्द्र शक्रवलं रवेण दरयो दशग्वैः॥

---

१. ऋ० १०।१६-१७।१-३। २. ऋ० १०।१४।१। ३. ऋ० १०।१४।८।
४. १०।१५।१४। ५. ऋ० १७।१६।५। ७. ऋ० १०।१३।५-६। ७. ऋ० १।६२।४।

नवग्वासः सुतसोमास इन्द्रं दशग्वासो अभ्यर्चन्त्यर्कैः ।
गव्यं चिदूर्वमपिधानवन्तं तं चिन्नरः शशमाना अप व्रन् ।।[१]

ये अग्नेः परिजज्ञिरे विरूपासो दिवस्परि ।
नवग्वो नु दशग्वो अङ्गिरस्तमः सचा देवेषु मंहते ।।[२]

नवग्व-दशग्वाः सप्तर्षय उक्ताः सन्ति । तथा हि —

अस्माकमत्र पितरस्त आसन् त्सप्त ऋषयो दौर्गहेबध्यमाने ।
त आयजन्त ऋदस्युमस्या इन्द्रं न वृत्रतुरमर्धदेवम् ।।[३]

तमु नः पूर्वे पितरो नवग्वाः सप्त विप्रासो अभि वाजयन्तः ।
नक्षद्दाभं ततुरिं पर्वतेष्ठामद्रोघवाचं मतिभिः शविष्ठम् ।।[४]

अङ्गिरो नामकाः पितरोऽग्नेः पुत्राः कथिता ऋग्वेदे । तथा हि —

गृणानो अङ्गिरोभिर्दस्म वि वरुषसा सूर्येण गोभिरन्धः ।
वि भूम्या अप्रथय इन्द्र सानु दिवोरज उपरमस्तमायः ।।[५]

तेऽङ्गिरो नामकाः पितरः स्वर्गस्यापि पुत्रा वर्णिताः । यथा —

अधो मातुरुषसः सप्त विप्रा जायेमहि प्रथमा वैधसो नॄन् ।
दिवस्पुत्रा अङ्गिरसो भवेमाऽद्रिं रुजेम धनिनं शुचन्तः ।।[६]

पितरः सोमप्रियाः सन्तीत्यपि वर्णितम् । तद्यथा —

उदीरतामवर उत् परास उन्मध्यमाः पितरः सोम्यासः ।
असुं य ईयुरवृका ऋतज्ञास्ते नोऽवन्तु पितरो हवेषु ।।
उपहूताः पितरः सोम्यासो बर्हिष्येषु निधिषु प्रियेषु ।
त आ गमन्तु त इह श्रुवन्त्वधि ब्रुवन्तु तेऽवन्त्वस्मान् ।।[७]

स वर्धिता वर्धनः पूयमानः सोमो मीढ्वाँ अभिनो ज्योतिषावीत् ।
येना नः पूर्वे पितरः पदज्ञाः स्वर्विदो अभिगा अद्रिमुष्णन् ।।[८]

इत्थं चोक्तप्रमाणयोगैरग्निरेव शरीरान्निर्गतं प्राणवायुना सह कृतमात्मानं स्वं रूपं वा सोमप्रियचन्द्रे ( चन्द्रलोके ) प्रस्थापयति । वैज्ञानिकमतप्रभावादपि समाकुञ्चितो विद्युच्छक्तिरूपोऽयमात्माऽविनाशी कालान्तरे स्वकर्मविपाकानुसारं ( स्वशक्त्यनुसारम् ) स्वर्ग-मोक्ष-नरक-विविधयोन्यादिपदेषु कुत्रचिन्नित्यत्वादवतिष्ठत एव ।

**आत्मा वै नित्यः**

इदानीमुपस्थिततत्वादात्मनो नित्यत्वम्, वैज्ञानिकदृष्टया विद्युच्छक्तिरूपत्वं च विविच्यते ।

---

१. ऋ० ५।२९।१२ । २. ऋ० १०।६२।६ । ३. ऋ० ४।४२।८ । ४. ऋ० ६।२२।२ ।
५. ऋ० १०।६२।५ । ६. ऋ० ४।२।१५ । ७. ऋ० १०।१५।१,५ । ८. ऋ० ९।९६।३९ ।

**ऐतरेयब्राह्मणे**—'आत्मा वा इदमेक एवाग्र आसीत्' ।[१]

**बृहदारण्यके**—'अयमात्मा ब्रह्म सर्वानुभूः'[२]

**मुण्डकोपनिषदि**—'ब्रह्मैवेदममृतं पुरस्तात्'[३]

**छान्दोग्योपनिषदि**—'तत्त्वमसि'[४]

तथैव कूर्मपुराणस्योत्तरार्धे द्वितीयाध्याये पार्वतीपतिनेश्वरेण प्रोक्तम्[५]—

आत्मा यः केवलः स्वस्थः सान्तः सूक्ष्मः सनातनः ।
अस्ति सर्वान्तरः साक्षाच्चिन्मात्रस्तमसः परः ।।
सोऽन्तर्यामी स पुरुषः स प्राणः स महेश्वरः ।।
स कालोऽग्निस्तदव्यक्तं स एवेदमिति श्रुतिः ।
अस्माद् विजायते विश्वमत्रैव प्रविलीयते ।
स मायी मायया बद्धः करोति विविधास्तनूः ।।

**तथा च गीतायाम्**[६]

कर्म ब्रह्मोद्भवं विद्धि ब्रह्माक्षरसमुद्भवम् ।
तस्मात् सर्वगतं ब्रह्म नित्यं यज्ञे प्रतिष्ठितम् ।।
एवं प्रवर्तितं चक्रं नानुवर्तयतीह यः ।
अघायुरिन्द्रियारामो मोघं पार्थ स जीवति ।।

इत्थं च ब्रह्मणः सर्वव्यापकत्वात् नित्यत्वम् । यथाकाशस्य सर्वव्यापकत्वादतो विभुत्वात् नित्यत्वम् । अत एव न्यायदर्शने आकाशलक्षणमुक्तम्–'शब्दगुणकमाकाशम्, तच्चैकं विभु नित्यं च' इति ।इत्थमेव पृथिव्यप्तेजोवाय्वादीनां चतुर्णां द्रव्याणां परमाणोरपि नित्यत्वम् । तस्य नित्यत्वमित्थं ज्ञेयं बौद्धचक्षुषेति —

सर्वेषां दृश्यपदार्थानां खण्डानि भवन्तीति सर्वेषां सम्मतमिदं मतम् । यथा दीर्घाणि खण्डानि भवन्ति तथैवाल्पान्यपि । अल्पखण्डानां क्रमशः खण्डेषु कृतेषु कानिचित् स्वल्पखडान्यपि स्युः । यथा त्रसरेणुद्व्यणुकादीनि । तत्रापि सूक्ष्मातिसूक्ष्मखण्डे कृते परमोऽणुः स्यात् । यथा अनवस्था न स्यादित्यन्तिमः खण्डः केवलं यौगिनां प्रत्यक्षविषयः परमाणुः कथ्यते । सोऽप्यतिसूक्ष्मत्वाद् नित्य एव । तथा च परमाणोर्लक्षणमाप्तैरुक्तम्—

जालान्तर्गते भानौ यत् सूक्ष्मं दृश्यते रजः
तस्य षष्ठतमो भागः परमाणुः स उच्यते ।। इति ।

इत्थं चोपर्युक्तप्रमाणैर्ज्ञायते यज्जगति द्वावेव पदार्थौ नित्यौ स्तः । तत्रैकः सामान्यजनदृष्टावगतः परमसूक्ष्मरूपः परमाणुः, अपरश्च आकाशादिवत् महत्तममनाद्यनन्तरूपं ब्रह्म वेति । द्वावपि पदार्थाविमौ सर्वत्र तिष्ठतः । एतद्द्वये लोको-

---

१. ऐत० २।१।१।१ । २. बृह० २।५।१९ । ३. मुण्ड० २।२।११ । ४. छान्दो० ६।८।७ ।
५. कू० पु० उत्तरा० २।४।६ । ६. गी० ३।१५–१६ ।

त्तरापरा शक्तिर्विद्यते । किन्तु नित्यस्य ब्रह्मणः सर्वजगद्व्यापकत्वात्तत्रैव ब्रह्मणि परमाणोरप्यन्तर्हिततत्वं सिद्धमेव । परमात्मनो ब्रह्मणोंऽशत्वाज्जीवात्मनोऽपि नित्यत्वम् । 'नेह नानास्ति किञ्चन' इत्यादिश्रुतिबोधितं सर्वधर्मशून्यमपि परमात्मब्रह्म 'इन्द्रो मायाभिः' इत्यादिश्रुतिभिः सर्वशक्तिसम्पन्नम् । तथा चाह वाक्यपदीये—

अनादिनिधनं ब्रह्म शब्दतत्त्वं यदक्षरम् ।
विवर्ततेऽर्थभावेन प्रक्रिया जगतो यतः ॥
एकमेव यदाम्नातं भिन्नं शक्तिव्यपाश्रयात् ।
अपृथक्त्वेऽपि शक्तिभ्यः पृथक्त्वेनेव वर्तते ॥[1]

ब्रह्मणः शक्तिसंवलितत्वादेव श्रीदुर्गायाः (महाशक्तेः) अपि सर्वशक्तिसम्पन्नत्वमुक्तं श्रीदुर्गासप्तशत्याम्—

यच्च किञ्चित् क्वचिद् वस्तु सदसद्वाऽखिलात्मिके ।
तस्य सर्वस्य या शक्तिः सा त्वं किं स्तूयसे तदा ॥[2]

अपरं च

ततस्समस्तदेवानां तेजोराशिसमुद्भवाम् ।
तां विलोक्य मुदं प्रापुरमरा महिषार्दिताः ॥[3]

**मा देवी योगनिद्रा एव**

योगनिद्रायाः (सुषुप्त्यवस्थापन्नाया निद्रायाः)सम्भवेनात्मनः सर्वदा चेतनत्वं सिद्धम् । परमात्मनोंऽशरूपा शक्तिरेव महामाया योगनिद्रैषा । सर्वं जनजगदनया मोहितं (निद्रितम्) सत् परमं सुखं मन्यते । इयं हि जगत् सम्मोहितं कृत्वापेक्षितं कार्यं कुरुत एव । अत एव परब्रह्मेच्छया सा सम्मोहनेनैव (निद्रात्मककृत्येनैव) हिरण्यकशिपोः षट् पुत्रान् देवकीगर्भे तथा सप्तमं देवकीगर्भमाकृष्य रोहिणीगर्भे च निधाय, अष्टमकृष्णजन्मानन्तरं स्वयं यशोदागर्भात् प्रादुर्भूता सती शुम्भादिदैत्यानां समुच्छेदनं कृतवती । तथा चोपवर्णितं ब्रह्मपुराणे—

हिरण्यकशिपोः पुत्राः षड् गर्भा इति विश्रुताः ।
विष्णुप्रयुक्ता तान् निद्रा क्रमाद् गर्भे न्ययोजयत् ॥
योगनिद्रा महामाया वैष्णवी मोहितं यया ।
अविद्यया जगत् सर्वं तामाह भगवान् हरिः ॥

हरिरुवाच

गच्छ निद्रे ममादेशात् पातालतलसंश्रयान् ।
एकैकश्येन षड् गर्भान् देवकीजठरे नय ॥
हतेषु तेषु कंसेन शेषाख्योंऽशस्ततोऽनघः ।
अंशांशेनोदरे तस्याः सप्तमः सम्भविष्यति ॥

---

१. वा० प०, ब्र० का० १-२ । २. दु० स० १।८२ । ३. दु० स० २।१९ ।

गोकुले वसुदेवस्य भार्या वै रोहिणी स्थिता ।
तस्याः प्रसूतिसमये गर्भो नेयस्त्वयोदरम् ॥
गर्भसङ्कर्षणात् सोऽथ लोके सङ्कर्षणेति वै ।
संज्ञामवाप्स्यते वीरः श्वेताद्रिशिखरोपमः ॥[१]

एवं च मधुकैटभनाशार्थं हरेः प्रबोधनाय तस्य नेत्रमुखनासिकाबाहुहृदयेभ्यो निःसृता देवैः स्तुतेयं देवी योगनिद्रा महामाया असुरान् निहत्य देवासुरादिभ्योऽप्यनुपमा शक्तिः पुनर्ब्रह्मण्यन्तर्हिता । तथैव प्रोक्तं दुर्गासप्तशत्याम्—

महामायाप्रभावेण संसारस्थितिकारिणा ।
तन्नात्र विस्मयः कार्यो योगनिद्रा जगत्पतेः ॥
महामाया हरेश्चैषा तया सम्मोह्यते जगत् ।
ज्ञानिनामपि चेतांसि देवी भगवती हि सा ॥[२]
एवं स्तुता तदा देवी तामसी तत्र वेधसा ।
विष्णोः प्रबोधनार्थाय निहन्तुं मधुकैटभौ ॥
नेत्रास्यनासिकाबाहुहृदयेभ्यस्तथोरसः ।
निर्गम्य दर्शने तस्थौ ब्रह्मणोऽव्यक्तजन्मनः ॥
उत्तस्थौ च जगन्नाथस्तया मुक्तो जनार्दनः ।[३]
ततः समस्तदेवानां तेजोराशिसमुद्भवाम् ।
तां विलोक्य मुदं प्रापुरमरा महिषार्दिताः ॥[४]

वैज्ञानिकदृशा निद्रा आत्मशक्तेः संवीतकम् ( स्विच् इति लोके प्रसिद्धम् ) । अनेन च संवीतकेन सती अपि शक्तिरन्तर्हिता भवति । अर्थाद् विद्युदिव न प्रकाशिता भवति । अन्तःकार्यं तु कुरुत एव । अत एवात्मशक्तेर्नित्यत्वं चेतनत्वं च स्थितमेव ।

## योगनिद्रा—व्युत्पत्तिः

**योगः**—योजनं संयोजनमिति । युज समाधौ, युजिर योगे वा धातोर्भावे घञ् । चजोः कु घिण्यतोः ( ७।३।५२ ) इति जकारस्य कुत्वेन गकारः । योगश्चित्तवृत्तिनिरोधः, संगतिर्ध्यानं वा । तथा चामरे—

सर्गः स्वभावनिर्मोक्षनिश्चयाध्यायसृष्टिषु ।
योगः सन्नहनोपायध्यानसङ्गतियुक्तिषु ॥ इति ।[५]

**निद्रा**—निद्राणमिति । निपूर्वाद् 'द्रा कुत्सायां गतौ' धातोर्भावे—आतश्चोपसर्गे ( ३।३।१०६ ) इत्यङ् । आतो लोप इटि च ( ६।४।६४ ) इति धातोराकारलोपः । ततष्टाप् । निद्रा=संवेशः । सम्यग् वेशनम् ( समाधौ प्रवेशनम् ) इति । तथा चामरे—

---

१. ब्र० पु० १८१।३६-४०, ४२ । २. दु० स० १।५४-५५ । ३. दु०स० १।८९-९१ । ४. दु० स० २।१९ । ५. अम० ३।३।२२ ।

विप्रलम्भो विसंवादो रिङ्गणं स्खलनं समे।
स्यान्निद्रा शयनं स्वापः स्वप्नः संवेश इत्यपि ।। इति ।[१]

**योगनिद्रा**—योगस्य (ईशप्रेरणया सङ्गतेः समाधेर्ध्यानस्य वा) निद्रा निःशेषेण शयनव्याजेन कुटिलगतिस्तीक्ष्णगतिर्गम्भीरगतिर्वा ) इति। योगनिद्रा अस्ति अस्यामिति अर्शआदिभ्योऽच् ( ५।२।१२७ ) इत्यच् । यस्येति चेति आकारलोपः । ततष्टाप् । योगनिद्रा=ईश्वरप्रिया महामाया । माया=माति मिमीते वा (विश्वस्य मानं परिमाणं वा करोति ) यया शक्त्येति विग्रहे मा माने, माङ्माने वा धातोः करणे—५५९ मछासससिभ्यो यः ( ४।११० ) इत्यौणादिको य प्रत्ययः। ततष्टाप्। माया=विश्वमापिका शक्तिः, ईश्वरीया विश्वस्य मापक-यन्त्ररूपा शक्तिः, यया विश्वस्य परिमाणं संघटनं वा युक्तं करोतीश्वरः। सैव महामाया योगनिद्रा इति।

अन्तर्हितत्वं च ब्रह्मणि तस्याः प्रदर्शितं दुर्गासप्तशत्याम्—

इति दत्त्वा तयोर्देवी यथाभिलषितं वरम् ।
बभूवान्तर्हिता सद्यो भक्त्या ताभ्यामभिष्टुता ।। इति ।[२]

इत्थं च यत्कर्म परब्रह्मणः प्रसिद्धं तत्तु तदधिकमेव तादात्म्यात्, शक्तिरूपाया महामायायाः श्रीदुर्गाम्बिकाया अपि श्रीदुर्गासप्तशती-प्रथमाध्याये प्रोक्तम्। तद्यथा—

यया त्वया जगत्स्रष्टा जगत् पात्यत्ति यो जगत् ।
सोऽपि निद्रावशं नीतः कस्त्वां स्तोतुमिहेश्वरः ।।[३]

अतः शक्तेः ( मायायाः ) तादात्म्यात् ब्रह्मणो न द्वैततापत्तिर्भवतीति ।

एवञ्च मायाविशिष्टस्य ( शक्तिरूपात्मकब्रह्मणः ) तस्य जगत्कर्तृत्वं वेदान्तपरिभाषायामप्युक्तम्—

'स च परमेश्वर एकोऽपि. स्वोपाधिभूतमायानिष्ठसत्त्वरजस्तमोगुणभेदेन ब्रह्मविष्णुमहेश्वरादिशब्दवाच्यतां भजते' इति ।[४]

इत्थं चेदं निष्पन्नं यद्वस्तुतः शक्ति विना ब्रह्मणः कथं जगत्कारणत्वं स्यादिति शक्तिसंवलितं शक्तिस्वरूपमेव वा परमात्मब्रह्म ज्ञेयमिति। सा च शक्तिः तेजोराशिमयं विद्युत्स्वरूपं ब्रह्मैव कथिता शुक्लयजुर्वेदे—

सर्वे निमेषा यज्ञिरे विद्युतः पुरुषादधि ।
नैनमूर्ध्वं न तिर्यञ्च न मध्ये परिजग्रभत् ।।[५]

एवञ्च जीवाजीवेषु सर्वेषु पदार्थेषु सा ब्रह्मस्वरूपा शक्तिर्विद्युच्छक्तिरिव विद्यत एव। तथा च 'सर्वं खल्विदं ब्रह्म' ( छान्दो० ३।१४।१ ), 'इदं सर्वं यदयमात्मा' ( बृहदा० २।४।६ ), 'तदनन्यत्वमारम्भणशब्दादिभ्यः' (ब्र० सू० २।१।१४) इत्यादिश्रुतिभिः प्रदर्शितमेतदिति ।

---

१. अम० १।८।३६। २. दु० स० १३।२७, २८। ३. दु०स० १।८३।
४. वे० प०, प्रत्यक्षपरि० १, पृ० ११८। ५. शुक्लय० ३२।२।

डा० एच्० काटन, एम्० बी० इ०, डी० एस्-सी०, एम्० आइ० इ० इ०-महोदयेन महावैज्ञानिकेन "अप्लाइड एलिक्ट्रिसिटी" नामके स्वग्रन्थे १९६० खीष्टवर्षीयपञ्चमसंस्करणे परमाणौ प्रदर्शिताया विद्युतः स्वरूपमित्थं विवेचितम्—

प्रत्येकं परमाणौ त्रिविधा विद्युतः सन्ति । परमाणोः कस्मिन्नपि भागे केन्द्रं कृत्वा यः केन्द्रवः ( न्युक्लियस ) कथितः, तस्मिन् द्वौ विद्युत्पदार्थौ स्तः । एकः आवेश( विद्युत् )युक्तो धनात्मकः प्रोटानसंज्ञकः ( स्थिरविद्युत् ), अपरश्च आवेशरहितो नपुंसको वा न्यूट्रानसंज्ञकः । केन्द्रवं परितो निश्चितकक्षे ( अर्बिट् ) एलेक्ट्रान-नामकाश्चलविद्युत्कणा आवेशयुक्ता ऋणात्मकाः सततं परिभ्रमन्ति । अत एव परमाणवोऽस्थिरा भवन्ति सततम् । एषा सर्वपरमाणुस्थितिः । उक्तै धनात्मक-ऋणात्मकविद्युतौ परस्परमपरमाकर्षतः । अत एव ततो बहिः विद्युत्प्रवाहो न भवति । यदा हि कस्यचिद् बाह्यकारणस्य (पदार्थस्य) सहसा परमाणौ बलप्रयोगो भवति, तदा तेभ्यश्चलविद्युत्कणेभ्य एलेक्ट्रान-नामकेभ्यः सततगम्यमानेभ्यस्तद्-बाह्यकारणदिशायां विद्युत्प्रवाहस्तत्कालमेवोत्पद्यते । स च प्रवाहः सदा धनात्मक-ऋणात्मकविद्युतोः परस्परं प्रत्येकापेक्षया न्यूनतया आधिक्येन वा प्रवहति । तयोर्द्वयोः समतायां हि विद्युदुदासीना नपुंसकाख्या वा भवति, या किञ्चित् कार्यं न करोति । एवं च (१) धनात्मकविद्युत्, (२) ऋणात्मकविद्युत्, (३) नपुंसक-विद्युत्—इति हि त्रिविधा विद्युद् भवति । तथा चोपवर्णितं डा० एच्० काटन-महोदयेन "अप्लाइड एलेक्ट्रिसिटी" नामके ग्रन्थे । तद् यथा—

# Chapter 1.

## The Electric Circuit

**Electricity.** What we call electricity is a part of the ultimate composition of all matter. The smallcst portion into which an element, such as copper, can be sub-divided without any change in its nature or composition is called an Atom. The atom itself can be sub-divided into still smaller portions, but these no longer have the same properties as the element from which they are derived. There are a number of theories of atomic structure, but the most useful to the electrical engineer is the Rutherford-Bohr conception of a miniature solar system in which there is a central Nucleus round which revolve Particles called Electrons, the number of these revolving, or planetary, electrons being dicided by the element itself. The electrons are associated with the nucleus in a very definite manner, namely, in groups to which the physicist has given the name Shell. Hor each shell there is a definite number of electrons for the completion of the shell; The number present can be less than but never greater than this. A few of these arrangements

are shown in fig. 1. 1. The simplest of all.........electrans in the outermost shell.

The electron is, as far as we know, a minute but definite amount of negative electricity. When an atom is in the normal state and therefore not exhibiting any evidence of electrification the charges on the electrons are neutralised by exactly equal positive charges wilhin the nucleus. Eaeh positive charge is called a Proton and the charges on the proton and electron are numerically equal. Thus there are as many protons in the nucleus as there are electrons to the normal atom. There are other contents of the nucleus such as the neutron, a particle which does not possess any charge, but as the neutron does not take part in the charges within the normal electric circuit it need not be considered further. etc. इत्यादि तद्ग्रन्थे द्रष्टव्यम् ।

**शुक्रशोणितयोः तैजसपरमाणुसत्त्वादेव सन्ततेरुत्पत्तिः**— एषा विद्युत्प्रक्रिया पुरुषादिजीवानामुत्पत्तिक्रमेऽपि परिलक्ष्यते सततम् । यतोऽखिलं जगद् ब्रह्ममयं पूर्वोक्तम्, 'सर्वे निमेषा यज्ञिरे विद्युतः पुरुषादधि'[1] इति शुक्लयजुर्वेदवचनाद् ब्रह्मणो विद्युत्स्वरूपत्वम् (प्रकाशस्वरूपत्वम्) चाप्युपवर्णितम् । अतः सर्वजीवेषु व्यापकत्वाच्छक्तिरूपात्मनः प्रकाशरूपस्य च परब्रह्मणोंऽशस्य तैजसपरमाणोः प्रवेशः सिद्ध एव, तेजसा विद्युच्छक्त्या वा मनुष्याणां सर्वविधप्रकाशितत्वात् । यतो विशेषेण द्योतते दीप्यत इति विद्युद्विग्रहे भ्राजेति क्विपाऽऽयात्ययमर्थः । एवञ्च शरीरे स्वयंप्रकाशस्य तस्य ब्रह्मरूपस्य परमाणोः सम्भवो निश्चित एव । अत एव 'आत्मा वै जायते पुत्रः' इति श्रुतिरपि संगच्छते । इत्थं हि पुरुषस्य शुक्रपरमाणुस्थिताया विद्युतः, स्त्रियाः शोणितपरमाणुस्थितया विद्युता सहैक्येन (सम्मेलनेन) सन्ततेरुत्पत्तिर्भवति । अयं जीवोत्पत्तिप्रकारोऽग्रे वक्ष्यमाणे जीवोत्पत्तिप्रकारविवेचने छान्दोग्योपनिषद्वर्णनेन स्पष्टीकृतो विद्यते । तद्वर्णने लोकस्य, पर्जन्यस्य, पृथिव्याः, पुरुषस्य, स्त्रियाश्चेति पञ्चानामेतेषाम् अग्नित्वं सिद्धान्तिम् । अत एतेनापि ज्ञायते यत् तैजसपरमाणुरूपेणैव ब्रह्मांशेन जीवोत्पत्तिर्भवतीति । तथा च धनात्मिकायाः शुक्रस्थविद्युतः सबलत्वात् पुत्रस्य, ऋणात्मिकायाः शोणितस्थविद्युतः सबलत्वाच्च कन्याया उत्पत्तिर्भवति । एतद्विद्युद्द्वयस्य साम्ये तु विद्युत उदासीनत्वे नपुंसकत्वे वा नपुंसकोत्पत्तिर्मांसपिण्डोत्पत्तिर्वा भवति । तथा च गरुडपुराणोक्तिः संगच्छते—

रक्ताधिक्ये भवेन्नारी शुक्राधिक्ये भवेत् पुमान् ।
शुक्रशोणितयोः साम्ये गर्भः षण्ढत्वमाप्नुयात् ॥[2]

---

१. शु० यजु० ३२।२ । २. ग० पु० प्रे० क० १९।१८ ।

रक्ताधिके भवेन्नारी पुमाञ्छुक्राधिके भवेत् ।
नपुंसके समे द्रव्ये त्रिविधं पिण्डसम्भवम् ।।[1]

**अन्नाधिक्यस्य सबलत्वमर्थः** —

इह शुक्रशोणितयोः परिमाणाधिक्ये न तात्पर्यम्, किन्तु तयोः परमाणुविद्युतोर्बलत्वाबलत्वयोरेव ग्रहणम् । यतः केषाञ्चिन्मनुष्याणां धातुक्षये दोषे सञ्जाते सति धातोः परिमाणबाहुल्येनापि तत्क्षय एव दृश्यते, कदापि तद्बाहुल्यात् सन्तानोत्पत्तिर्न लक्ष्यते । अतो ज्ञायते यत् सर्वं कार्यं ब्रह्मबलेनैव ( शक्तिबलेनैव ) सिद्धं भवतीति तथैव कठोपनिषद्वचनम्—

तदेव शुक्रं तद् ब्रह्म तदेवामृतमुच्यते ।
तस्मिल्लोकाः श्रिताः सर्वे तदु नात्येति कश्चन ।।[2]

**अयं भावः**—विद्युद्रूपमायासंवलितब्रह्मणोंऽशभूता विद्युदेव ब्रह्म, तदेव शुक्रम्, तदेव अमृतम् । तस्मिन्नेव शुक्ररूपे ब्रह्मणि सर्वे कामुका लोकाः संश्रिताः सन्ति । तद् ब्रह्म कश्चिदपि नाक्रान्तुं शक्नोति । उपर्युक्तकठोपनिषद्वचनस्यायमर्थः "निर्मातारं चैके पुत्रादयश्च" इति ब्रह्मसूत्रशाङ्करभाष्यस्य तृतीयाध्याये, द्वितीयपादे, द्वितीयसूत्रे भामतीटीकायाः स्वारस्येनायाति । विद्युतश्चाक्षुषप्रत्यक्षेणाभिव्यक्तिर्न भवति, किन्तु जगतो निःशेषं कार्यं विद्युतैव भवतीति । तथा ब्रह्मसूत्रम् "मायामात्रं तु कात्स्न्र्येनानभिव्यक्तस्वरूपत्वात्' ।[3]

तथैवोक्तं गीतायाम्—

कर्म ब्रह्मोद्भवं विद्धि ब्रह्माक्षरसमुद्भवम् ।
तस्मात् सर्वगतं ब्रह्म नित्यं यज्ञे प्रतिष्ठितम् ।।[4]

अर्थाद् अक्षरेण=अनश्वरेण सबलेन वा ब्रह्मणा सर्वं कर्म भवति । अत एव निर्बलमयोग्यं शरीरं त्यक्त्वा स नित्य आत्मा अन्यस्मिन् योग्ये सबले शरीरे संयाति । तथोक्तं गीतायाम्—

वासांसि जीर्णानि यथा विहाय नवानि गृह्णाति नरोऽपराणि ।
तथा शरीराणि विहाय जीर्णान्यन्यानि संयाति नवानि देही ।।[5]

यथा पिप्पलादिवृक्षबीजेषु पिप्पलादिवृक्षाणां सर्वाकारः सूक्ष्मरूपेणान्तर्हितो भवति कालेन वृक्षरूपे प्रस्फुटितो भवति च, तथैवायमात्मा पृथिव्यप्तेजोवाय्वाकाश–पञ्चमहाभूतानाम् अतिसूक्ष्म–पञ्चतन्मात्राभिः सह प्रकाशितो भवति ताभिः सहैव देहान्निर्गच्छत्यन्यत्रोपगच्छति च । तथैव वर्णितं मनुस्मृतौ—

पञ्चभ्य एव मात्राभ्यः प्रेत्य दुष्कृतिनां नृणाम् ।
शरीरं यातनार्थीयमन्यदुत्पद्यते ध्रुवम् ।। इति ।[6]

---

१. ग० पु० प्रे० क० १९।२४ । २. क० ५।८ । ३. ब्र० शा० अ० ३ पा० २ सू० ३ । ४ गी० ३।१५ । ५. गी० २।२२ । ६. मनु० १२।१६ ।

अतः शरीरान्निर्गतो निर्बल आत्मा श्राद्धीयपिण्डजलादीनां सत्त्वं संगृह्य सबलः सन् ब्रह्म ब्रह्मक्षेत्रं वा यथेष्टमवाप्नुयादिति श्राद्धकर्म प्रतिष्ठापितं महर्षिभिः।

**अथ श्राद्धीय-सत्त्व ( सोम )बलेनात्मा हस्तपरिमितशरीरो यमालयं गच्छति—**

आदित्यानामहं विष्णुर्ज्योतिषां रविरंशुमान्।
मरीचिर्मरुतामस्मि नक्षत्राणामहं शशी ॥[1]

इति गीतावचनानुसारं सूर्यादीनां किरणान्यपि विद्युत्सूत्राणि एव सन्ति। तानि यथा जलांशान् सरसद्रव्यरसांश्चाकर्षन्ति सततम्, तथैव ब्रह्मांशो विद्युद्रूप आत्मा श्राद्धीयपिण्डजलादीनां सत्त्वमाकृष्य सबलीभूयापेक्षितदिशमाकाशे संगच्छते।

'अनादिनिधनं ब्रह्म शब्दतत्त्वं यदक्षरम्।
विवर्ततेऽर्थभावेन प्रक्रिया जगतो यतः ॥'[2]

इति वाक्यपदीयवचनानुसारम् आत्मनः शब्दब्रह्मांशत्वात् 'शब्दगुणकमाकाशम्' इत्यन्नम्भट्टविद्वद्वरमतानुसारं तस्याकाशवृत्तित्वाच्चाकाशं प्रत्येव गतिर्भवति वायुवच्छरीरेण हस्तपरिमितेनेति। स आत्मा कः पदार्थः, कुत्र च तिष्ठतीति जिज्ञासायां विविच्यते—

ज्ञानाधार आत्मा। स द्विविधः—एकः परमात्मा सुखदुःखादिरहितः, स सर्वज्ञो नित्यो व्यापकश्च, यस्मिन्नखिलं ब्रह्माण्डं विराजते। अपरो जीवात्मा। मनोयोगेन सुखदुःखाद्यनुभवकर्ता, नित्यो व्यापकश्च, यः प्रत्येकजनेषु भिन्नो भिन्नः प्रतीयते। एवं मनोऽप्येकमिन्द्रियम्। साक्षात् सुखदुःखाद्यनुभवि, नित्यमतिसूक्ष्मं परमाणुरूपं च, यत् प्रत्यात्मवृत्तित्वादनन्तं प्रतीयते। तथा चान्नम्भट्टेन तर्कसंग्रहप्रत्यक्षखण्डे प्रदर्शितम्—

'ज्ञानाधिकरणमात्मा। स द्विविधो जीवात्मा परमात्मा च। तत्रेश्वरः सर्वज्ञः परमात्मैक एव सुखदुःखादिरहितः। जीवात्मा प्रतिशरीरं भिन्नो विभुर्नित्यश्च' इति[3]

"सुखदुःखाद्युपलब्धिसाधनमिन्द्रियं मनः। तच्च प्रत्यात्मनियतत्वादनन्तं परमाणुरूपं नित्यं च' इति च।[4]

अक्षराणामुच्चारणकाले स जीवात्मा यत्किञ्चित्पदार्थविवक्षया मनसा सह तत्पदार्थयोगं करोति, तन्मनश्च जठराग्निमाहत्य नाभिस्थं मारुतं प्रेरयति। तदा स वायुस्ततो हृदि प्राणवायुदेशं गच्छन् कण्ठदेशतः पुनर्मूर्ध्न्यभिहतः सन् मुखस्थानि तत्तत्स्थानान्युपलक्ष्य यथोचितस्वरमुत्पादयति। एतेन क्रमेणात्मा मनोयोगान् वर्णान् जनयति। तथा चोक्तं पाणिनिशिक्षायां कारिकायाम्—

---

१. गी० १०।२८। २. वा० प० ब्र० का० १। ३. तर्क० प्र० ख० १७।
४. तर्क० प्रत्य० ख० १८।

आत्मा बुद्धया समेत्यर्थान् मनो युङ्क्ते विवक्षया ।
मनः कायाग्निमाहन्ति स प्रेरयति मारुतम् ।।
मारुतस्तूरसि चरन् मन्द्रं जनयति स्वरम् ।
प्रातः सवनयोगं तं छन्दो गायत्रमाश्रितम् ।।[1] इति ।
सोदीर्णो मूर्ध्न्यभिहतो वक्त्रमापद्य मारुतः ।
वर्णाञ्जनयते तेषां विभागः पञ्चधा स्मृतः ।।[2]

गरुडपुराणे च दशधा वायुः प्रोक्तः—

पिण्डमध्ये स्थिताः प्रोक्ताः प्रधाना दशनाडिकाः ।
प्राणोऽपानः समानश्च उदानो व्यान एव च ।।
नागः कूर्मोऽथ कृकरो देवदत्तो धनञ्जयः ।
केवलं भुक्तमन्नं च पुष्टिदं सर्वदेहिनाम् ।।
संप्रविश्य गुदे सम्यक् पृथगन्नं पृथग् जलम् ।
ऊर्ध्वमार्गे जलं कृत्वा तदन्नं च जलोपरि ।।
अग्नेस्त्वधः स्वयं प्राणो ह्यग्निं चैव धमेच्छनैः ।
वायुनाध्मायमानोऽपि पृथक् किट्टं पृथग्रसम् ।।[3] इति ।

किन्तूपाधिभेदादेते वायुभेदाः प्राणवायोरेवावयवाः । अतो ज्ञायते यत् केवलं प्राणवायुरेव सर्वत्र शरीरे सञ्चरति । तथा चोक्तं तर्कसंग्रहप्रत्यक्षखण्डे—"शरीरान्तःसञ्चारी वायुः प्राणः । स चैकोऽप्युपाधिभेदात् प्राणापानादिसंज्ञां लभते इति ।[4]

इत्थमेव तट्टीकायां वैद्यनाथशास्त्रिणोक्तम्—

"हृदि प्राणो गुदेऽपानः समानो नाभिसंस्थितः ।
उदानः कण्ठदेशस्थो व्यानः सर्वशरीरगः ।। इति ।

अत्र तु क्रियाभेदात् प्राण एव पञ्चसंज्ञां लभते, न तु शरीरे पञ्च । अन्यथा मूर्तानां समानदेशता स्यादिति बोध्यम् ।

प्रधानधमनीनाड्या सह सम्बद्धासु सर्वासु शिरानाडीषु प्राणवायुरेव सञ्चरन् रक्तं सञ्चारयति । अत एव शार्ङ्गधरसंहितायां धमनीगत्या सुखदुःखानुभवः प्रदर्शितः—

करस्याङ्गुष्ठमूले या धमनी जीवसाक्षिणी ।
तच्चेष्टया सुखं दुःखं ज्ञेयं कायस्य पण्डितैः ।।[5] इति ।

इत्थं च किट्टेन मलेन वा यदा नाड्यः पूर्णा भवन्ति तदा स्थानाभावे सति प्राणवायुः शरीराद् निर्गमनप्रयत्नं करोति । केवलं वायुरेवात्मनेऽन्नादिसत्त्वं सोमं प्रदाय तं पुष्णाति । अतो देहान्निर्गतेन वायुना सह स आत्मापि निर्गतो भवति ।

---

१. पा० शि०, का० ६-७ । २. पा० शि०, का० ८ । ३. ग० पु०, प्रे० क० १८।२६-२८ । ४. तर्क प्र० १३ । २, शा० सं०, ख० १ अ० ३।१

**अथ प्राणवायोः ( सात्मनः ) देहान्निष्क्रमणविधिः—**

यथा वर्णोत्पत्तिर्भवति तथैवात्मनो निष्क्रमणमपि । तथा हि—

वर्णोच्चारणकाले आत्मना प्रेरितं मनो जाठराग्निं हन्ति, ततोऽग्निना प्रेरितो वायुर्लघुर्भूत्वा जठरतलादुत्थितः सन् हृदयदेशंश्चरन् आस्यदेशमागत्य तत्तत्स्थानेभ्यो वर्णान् जनयति । तथैव रोगादिभिराक्रान्ते खाद्यान्न-पेयपानाद्यभावे वायुर्दूषितो भवति । वायोः सञ्चरणशैथिल्याद् हृदयस्थात्मनि सोमप्राप्त्यभावो जायते । सोमाभावादात्मनि शैत्याभावः, शैत्याभावाच्च तत्रौष्ण्यमुत्पद्यते । अथ च तद-पेक्षाकृतं पाच्यपदार्थाभावाद् जाठराग्नौ क्रमशः सततमौष्ण्याधिक्यमपि सम्भवति । ततोऽग्निप्रेरितेनोर्ध्वगतिकेन वायुना सह निर्बलीभूतः स आत्मा ऊर्ध्वाधःस्थितेन केनचिद् आस्यनासिकादिमार्गेण देहाद् बहिर्भूतो भवति । एवंविधौ जाते चात्मनो विग्रहान्निष्क्रमणकालेऽन्तःस्थाग्नेर्महती ज्वाला भवतीति सिद्धमेव । तज्ज्वलनेना-भूतपूर्वा वागिन्द्रियादिशून्या महत्यसह्या व्यथोपजायते ।

एवमेव महतां योगबलादपि प्राणवायुनिर्गमनकाले महद् ज्वलनमुत्पद्यते । तद् यथा दक्षप्रजापतिना क्रियमाणे यज्ञे निमन्त्रितेषु देवेष्वनिमन्त्रिते शिवे निन्दिते सती दाक्षायणी कोपाकुला तत्र यज्ञ एव योगात् स्वदेहं जज्वाल । तथा चोपवर्णितं ब्रह्मपुराणे—

किं पुनः सकलाधीशो महादेवो जगद्गुरुः ।
श्रुतं तन्निन्दनं तर्हि धारयामि न देहकम् ॥[1]

**इत्युक्त्वा सा महासती—**

कोपेन महताऽऽविष्टा प्रजज्वाल सुरेश्वरी ।
शिवैकचेतना देहं बलाद् योगाच्च तत्यजे ॥[2] इति ।

इत्थमेवासुरक्षयाय शस्त्रास्त्रनिर्माणार्थं देवैर्दधीचेरस्थिनि याचिते सति सोऽपि महर्षिर्योगात् सवायुं सवह्निं चात्मानं तत्याज । तथैवोक्तं ब्रह्मपुराणे—

इत्युक्त्वासौ बद्धपद्मासनस्थो
नासाग्रदत्ताक्षिप्रकाशप्रसन्नः ।
वायुं सवह्निं मध्यमोद्घाटयोगान् (त्)—
नीत्वा शनैर्देहराकाशगर्भम् ॥
यदप्रमेयं परमं पदं यद्
यद् ब्रह्मरूपं यदुपासितव्यम् ।
तत्रैव विन्यस्य धियं महात्मा
सायुज्यतां ब्रह्मणोऽसौ जगाम ॥[3]

इत्थं च देहाद् बहिर्भूतः प्रज्वलितः सन् स आत्मा वियति नानास्थानानि परिभ्रमन् यमपुरं प्राप्नोति ।

---

१. ब्र० पु० १०९।८ । २. ब्र०पु० १०९।१० । ३. ब्र० पु० ११०।४९-५० ।

तथा च गरुडपुराणे

ततः संवत्सरस्यान्ते प्रत्यासन्ने यमालये।
बहु भान्ति पुरे देहं हस्तमात्रं समुत्सृजेत् ॥
अङ्गुष्ठमात्रवायुश्च पूर्वरूपं समुत्सृजन्।
व्रजन्नेति पदैकेन तथैवैकेन गच्छति।
यथा तृणजलौकैवं देही कर्मानुगो वशः ॥[१]

रूपरहितत्वे सति स्पर्शवत्त्वाद् वायुरिव स जीवो हस्तपरिमिताकारो गच्छन् वर्षस्यान्ते यमालयसमीपं प्राप्याङ्गुष्ठपरिमितशरीरो भूत्वा केवलमेकेनैव पदा तृणजलौकावद् वायौ गच्छति। परमत्र विचार्यते यदेकेन पादेन कथं तस्य गमनं सम्भवेदिति। आकाशे वायुना सह संवहनं चेत् सुकरमिति, तर्हि वैज्ञानिक-मतेनात्मनो विद्युच्छक्तिरूपत्वमेव सुकरतरं सम्मान्यं वरं च स्यात्। एवम्भूतः स विद्युद्रूप आत्माकाशे वायौ वा हस्तपादादिकं विहायापि पिण्डादिसत्त्वसोमबलेन सुवहेत्। यथाकाशे वाणे प्रक्षिप्ते सति तस्मिन् यावद् बलं प्रयुज्यते तावतैव बलेन तावद्दूरं स गच्छति। नष्टे बले त्वग्रे गच्छन् स निर्बलो भूत्वा यत्र कुत्रचिद् भूमौ पतति। तथैव गतिरात्मनोऽपि।

एवञ्च देहान्निर्गतात्मा केवलमात्मीयजनेभ्यः श्राद्धीयपिण्डजलादीनां सत्त्वं सोमरूपं बलवृद्ध्यर्थमपेक्षते। ततः स सुखी सबलश्च सम्भूयात्मीयजनेभ्यः सुख-समृद्ध्यर्थमाशीर्वादान् ददातीति श्राद्धमवश्यं सर्वजनैर्विध्यनुसारं सर्वप्रयत्नेन करणीयं यथाशक्यम्। तदाशीर्भिस्तद्वंशीया इहापि सुखसंवर्धिताः सम्पद्यन्ते।

विधिनानेनैव देहान्निर्गतात्मा संवत्सरे पूर्णे देहान्तरं प्राप्य स्वीयेन कर्मणा नरके स्वर्गे वोपगच्छतीति महामहोपाध्यायैः डा० पाण्डुरङ्गवामनकाणेमहो-दयैरपि स्वकीयस्य "धर्मशास्त्र का इतिहास" इत्याख्यस्य ग्रन्थस्य तृतीयभागे समुद्धृतम् ११५४ पृष्ठे ५७ उपबन्धे—

तत्क्षणादेव गृह्णाति शरीरमातिवाहिकम्।
ऊर्ध्वं व्रजन्ति भूतानि त्रीण्यस्मात् तस्य विग्रहात् ॥
आतिवाहिकसंज्ञोऽसौ देहो भवति भार्गव।
केवलं तन्मनुष्याणां नान्येषां प्राणिनां क्वचित् ॥
प्रेतपिण्डैस्ततो दत्तैर्देहमाप्नोति भार्गव।
भोगदेहमिति प्रोक्तं क्रमादेव न संशयः ॥
प्रेतपिण्डा न दीयन्ते यस्य तस्य विमोक्षणम्।
श्माशानिकेभ्यो देवेभ्य आकल्पं नैव विद्यते ॥
तत्रास्य यातना घोराः शीतवातातपोद्भवाः।
ततः सपिण्डीकरणे बान्धवैः स कृते नरः ॥

---

१. ग० पु०, प्रे० क० ५।२८-२६।

पूर्णे संवत्सरे देहमतोऽन्यं प्रतिपद्यते।
ततः स नरके याति स्वर्गे वा स्वेन कर्मणा॥[1]

गोविन्दानन्द ने "त्रीणिभूतानि" को "पृथिव्यप्तेजांसि" के अर्थ में लिया है और इस प्रकार रघुनन्दन से मतभेद उपस्थित किया है। गरुडपुराण ( प्रेतखण्ड १०।७९ ) ने भी यही बात कही है।

उत्क्रामन्तं स्थितं वापि भुञ्जानं वा गुणान्वितम्।
विमूढा नानुपश्यन्ति पश्यन्ति ज्ञानचक्षुषः॥
आतिवाहिकमित्येवं वायवीयं वदन्ति हि।
पुत्रादिभिः कृताश्चेत् स्युः पिण्डा दश दशाह्निकाः॥
पिण्डजेन तु देहेन वायुजश्चैकतां व्रजेत्।
पिण्डतो यदि नैव स्याद् वायुजोऽर्हति यातनाम्॥

प्रथम पद्य गीता का है ( १५।१० )।

११५५ पृष्ठे ६८ उपबन्धे च—

यस्यैतानि न दीयन्ते प्रेतश्राद्धानि षोडश।
पिशाचत्वं ध्रुवं तस्य दत्तैः श्राद्धशतैरपि॥

यम ( श्राद्धक्रियाकौमुदी पृ० ३६२ एवं प्राय० वि० पृ० १४ तत्त्वार्थकौमुदी )

यही पद्य लिखितस्मृति ( ५।१६ ) एवं गरुडपुराण ( प्रे० ख० ३४।१३१ ) में भी पाया जाता है। ) इति।

## अथ साम्प्रदायिकं वैदेशिकं च श्राद्धम्

एवम्भूतं महत्त्वकरं श्राद्धं च येन केनचिदन्यप्रकारेणापि बौद्ध-जैन-सिक्खादि-साम्प्रदायिकैः, अन्यदेशीयजातिभिः, यवनादिजातिमिश्चापि सर्वैः क्रियत एव। पूर्वमेवेदमुक्तं यत् 'श्रद्धया पितृहेतुकं यद् दीयते, कार्यं वा क्रियते तच्छ्राद्धमिति'। अतो नानाप्रदेशनिवासिनां चात्मनो नित्यत्ववादिनामपि तेषां निधनानन्तरं यत् कर्म क्रियते तच्छ्राद्धमेवास्ति मन्तव्यम्। यथा—

**बौद्धसंस्कृतौ**—बौद्धमतानुयायिनो लङ्का-वर्मा-थाईलैण्ड-कम्बोडिया-लाओस-तिब्बत-मङ्गोलिया-जापान-चीनादिदेशनिवासिनः सन्ति। तेषां हि द्वौ भेदौ। १—हीनयानः, २—महायानश्च। हीनयानसम्प्रदायस्त्रीन् मार्गानाश्रयते। ते च क्रमशः ( १ ) श्रावकमार्गः, ( २ ) प्रत्येक-बुद्धमार्गः ( ज्ञानमार्गः ), ( ३ ) सम्यक्सम्बुद्धमार्गश्च। महायानसम्प्रदायः केवलं सम्यक् सम्बुद्धमार्गस्यैव पोषकः। हीनयानसाम्प्रदायिका लङ्का-वर्मा-थाईलैण्ड-कम्बोडिया-लाओसादिप्रदेशेषु निवसन्ति, महायानसाम्प्रदायिकाश्च तिब्बत-मङ्गोलिया-चीन-वियतनामादिप्रदेशेषु। जापानदेशे तूभयसम्प्रदायौ स्तः। सर्वे बौद्धमतानुयायिनो गुरोर्बौद्धभिक्षवो

---

१. विष्णुधर्मोत्तरपुराणे—प्राय० वि०, पृ० १३-१४ एवं शुद्धितत्त्वस्य पृ० ३२४।

भवन्ति। तेषु केचन विवाहं कृत्वा गृहस्था भवन्ति, केचन च बौद्धभिक्षव एव। गृहस्थैर्बौद्धभिक्षुभिः तत्रस्थनियमानुसारं स्वपुत्रेष्वेकः पुत्रो विहारे बौद्धभिक्षुरूपेण निवासार्थं दातव्यो भवति। एकस्मिन्नेव पुत्रे सति तु यथेच्छम्। गुरुः तिब्बती-भाषायां 'लामा' पालिभाषायां च 'भदन्तः, भन्ते वा' कथ्यते। हीनयानसाम्प्र-दायिकाः थेरवादपोषकाः (स्थविरवादपोषकाः) सन्ति। बौद्धानां मठः 'विहारः' कथ्यते।

बौद्धा आत्मानमनित्यं मन्यन्ते। तथा च 'मिलिन्दपन्हो' ग्रन्थे 'नच सो नच अञ्ञो' इति सिद्धान्तितम्। तस्यायमाशयो यत् 'स एव नास्ति तथा अन्य-श्चापि नास्ति' इति। अर्थात् सर्वं वस्तु आत्मरहितमेव।

पं० बलदेवोपाध्यायकृतस्य 'बौद्धदर्शनमीमांसा' नामकग्रन्थस्य प्रथमखण्डे ९७ पृष्ठे बुद्ध-नैरात्म्यवादविषयकोल्लेखस्यायमाशयः स्पष्टीकृतो विद्यते—

'सर्वम् अनात्म' इति हि बुद्धधर्मस्य प्रधानो मान्यसिद्धान्तः। अर्थात् सर्वं जगद् आत्मरहितम्। आत्मरहितमित्यस्य अवयविरहितमित्यर्थः। बुद्धोऽवयविनं न मन्यते। स धर्मसमुच्चयमेव मन्यते केवलम्। यथा घटः परमाणूनामवयवानां नावयवी, अपि तु धर्मसमुच्चयः (अवयवसमुच्चयः); 'सर्वं अनात्म' इत्यत्र अनात्म-शब्दे नञः पर्युदासप्रतिषेधरूपत्वात्। एतेनात्मनोऽभावे द्योतिते सति समस्तपदार्थानां भावो द्योतितः। इत्थं च बुद्धसिद्धान्ते आत्मनोऽनित्यत्वं समर्थित-मिति निष्कर्षः।

परन्तु आत्मनोऽनित्यत्वे सत्यपि लङ्कादिदेशेषु कस्यान्चिद् निर्वाणे (मरणे) जाते सति केचन तं मरणदिनाद् दिनद्वयानन्तरं सप्तदिनानन्तरं वा भूमि-गर्ते प्रक्षिपन्ति, केचित्तु धनिनश्चेद् उक्तदिनानन्तरं दाहयित्वा तदस्थिसञ्चयं कृत्वा भूमिगर्ते प्रक्षिप्य तदुपरि स्तूपं निर्माय्योत्सवं मन्यन्ते। मरणदिनात् सप्तमे दिने, तृतीयमास-मरणतिथौ वा बन्धून् भोजयन्ति, दानं कुर्वन्ति, त्रिपिटकस्य काँश्चि-दंशान्, प्रपठ्योत्सवं मन्यन्ते। अनेन प्रकारेण पूर्वोक्तश्राद्धपरिभाषानुसारं यत् श्रद्धया दानादिकरणं तेषामिदं श्राद्धमेव।

**जैनसंस्कृतौ**—जैनमते आत्मनो नित्यत्वादि निम्नाङ्कितप्रकारेणेष्टम्। तच्च भट्टाकलङ्कदेवविरचिते "तत्त्वार्थवार्तिके" (द्वितीयभागे) पञ्चमाध्याये सूत्रादिभिरित्थमुपवर्णितम्—

"नित्यावस्थितान्यरूपाणि ॥ ४ ॥

नित्यशब्दो ध्रौव्यवचनः ॥ १ ॥

अयं नित्यशब्दः ध्रौव्यवचनो वेदितव्यः। नेर्ध्रुवे त्योऽन्वाख्यातः। किं पुनरिह नित्यत्वम्? तद्भावाव्ययो नित्यत्वम्। २।

येन भावेन उपलक्षितं द्रव्यं तस्य भावस्याऽव्ययो नित्यत्वमुच्यते। वक्ष्यते 'तद्भावाव्ययं नित्यम्' (५।३१) इति। धर्मादीनि द्रव्याणि गतिहेतुत्वादिविशेष-

लक्षणद्रव्यार्थादेशात्, अस्तित्वादिसामान्यलक्षणद्रव्यार्थादेशाच्च कदाचिदपि न व्ययन्तीति नित्यानि ।

इयत्तानतिवृत्तेरवस्थितानि ।३।

धर्मादीनि षडपि द्रव्याणि कदाचिदपि षडिति इयत्त्वं नातिवर्तन्ते, ततोऽवस्थितानीत्युच्यन्ते । अथवा, धर्माधर्मलोकाकाशैकजीवानां तुल्यासंख्येयप्रदेशत्वम्, आलोकाकाशस्य पुद्गलानां चाऽनन्तप्रदेशत्वमित्येतदियत्त्वम् । तस्यानतिवृत्तेः अवस्थितानीति व्यपदिश्यन्ते ।।" इति ।

परन्तु स्याद्वादमते सर्वविधा एव प्रकाराः संश्रिताः । महावीरस्वामी जिनः ( ज्ञानी ) कथ्यते । तन्मतावलम्बी जैनः प्रख्यायते । स्याद्वादानुसारं जैनमते अवस्थाभेदाद् आत्मा नित्योऽनित्यश्च । जीवगतात्मा नश्वरदेहनाशेन सह नष्टो भवति, अत आत्मा मनुष्याद्यवस्थानुसारमनित्यः । देवयोनिगतात्मा अमरोऽस्ति, अतो देवावस्थानुसारं स आत्मा नित्यः । ईदृशावस्थाद्वयानुसारमेव तेषां स्याद्वादपक्षो दृढीभूतो जैनमतानुयायिनाम् ।

जैनसम्प्रदाये विवाहादिसंस्कारसम्बन्धो जैनेन सह, जैनेतरगृहस्थेनापि सह भवति । अतो निधनानन्तरं तेषाम् आशौचादिक्रिया जैनमतानुसारं जैनेतरगृहस्थानुसारं चाप्युभयथा सम्पद्यन्ते । जैनमते द्वादशाहाशौचानन्तरं त्रयोदशाहे बन्धुबान्धवादिभोजनक्रिया भवति केवलम् । द्वादशाहपर्यन्तं न काप्यन्या क्रिया । जैनेतरगृहस्थमते तु सर्वापि पिण्डादिश्राद्धक्रिया भवतीति । अतो ज्ञायते यद् जैनमतेऽपि श्राद्धं भवत्येवात्मनो नित्यत्वानित्यत्वपक्षयोः सतोरपि ।

**सिक्खसंस्कृतौ**—सिक्खधर्मे वर्णितं विद्यते यदात्मामरः । स व्यापकः सन् प्रत्येकं जने तिष्ठति । ततः सम्पूर्णं जगदुत्पन्नम् । अयं सर्वस्थले पूर्णः । ननु कश्चनात्र भ्रमः कर्तव्यः । यतो जगदीशो जगति, जगच्च जगदीशे । अत आत्मा नित्यः । सिक्खसम्प्रदाये 'ग्रन्थसाहब' इति नानकग्रन्थे तथोपवर्णिम्—

ब्रह्म में जन जन में पारब्रह्म ।
ये के आप नहीं किछु भ्रम ।।
सहस सयानप ले आ न जाइये ।
नानक ऐसा गुर बड़ भागी पाइये ।।[1]

अवल अल्ला नूर उपाया कुदरत के सब बन्दे ।
एक नूर से सब जग उपज्या कौन भले कौन मन्दे ।।
लोगा भरम न भूलो भाई··············
खालक खलक खलक में खालक पूर रेव सब ठाई ।।[2]

---

१. श्रीगुरु ग्रन्थसाहब, पृ० २८७ तीसरी पंक्ति

२. श्रीगुरु ग्रन्थसाहब, पृ० १३४९ अठारवीं पंक्ति

**आत्मनः पुनर्जन्म**—नानायोनिषु भ्रमतस्तस्यात्मनोऽन्ततो गत्वा प्रभुशरणमेव सर्वश्रेष्ठस्थानं निश्चितम्। अतः पौनःपुन्येन जन्मग्रहणं नानकवचनेन स्पष्टीकृतम्—

कीर्त करम के बीछड़े कर कृपा मेलो राम।
चार कुन्त दै दिश भ्रमे थक आये प्रभु की साम ।।
नानक की वेनन्तिया कर कृपा दीजै नाम।
हर में लो स्वामी संग प्रभ जिसका नेचल धाम ।।[1]
जिन जिन नाम ध्याया तिनके काज सरे।
नानक मंगे दर्स दान कृपा करो हरे ।।[2]

सिक्खसम्प्रदाये निधनानन्तरं शवात् किञ्चिद् दूरं समीप एवोपविश्य 'सुखमनी' ग्रन्थस्य पाठः क्रियते। शवदाहानन्तरं गृहमागत्य जनाः प्रार्थनां कुर्वन्ति तथा च प्रसादं गृह्णन्ति। प्रारम्भतस्त्रयोदशदिनपर्यन्तं गुरु-ग्रन्थसाहबस्य पाठपूर्ति विदधति। पाठान्ते प्रार्थयन्ति यत्—"हे गुरु नानक जी, यह जो बिछड़ी आत्मा इसको अपने पवित्र चरण-कमलों में निवास दीजिये, हम लोगों को शान्ति और भांडा मनन की शक्ति दीजिये। जिसकी बस्त तिस आगे राखे, प्रभु की आज्ञा माने माथे" ।। इति।

ते मृत्युदिनात् प्रत्येकमासे, षष्ठमासे, वार्षिकतिथौ वा मृतकं स्मरन्ति भोजनं च कुर्वन्ति कारयन्ति वा। एतेन कर्मणा ज्ञायते यत् सिक्खसाम्प्रदायिका अपि आत्मानं नित्यं मन्यन्ते श्राद्धं चाप्युक्तदिशा कुर्वन्ति।

**यवनसंस्कृतौ**—यवनधर्मे द्वौ सम्प्रदायौ स्तः। प्रथमः 'सुन्नी' इति नाम्ना प्रसिद्धः, द्वितीयश्च 'सिया' इति। सुन्नीसम्प्रदायो दुःखातिरेके 'मुहर्रम' काले च रोदिति वक्षःस्थलं च हस्तेन ताडयति। सियासम्प्रदायस्तु स्तब्धो भूत्वा शान्तस्तिष्ठति। सम्प्रदायस्यास्य कश्चन एव कदाचिद् दुःखातिरेके रोदिति। द्वावपि सम्प्रदायौ इस्लामधर्मं मन्येते। इस्लामधर्मश्च कष्ट आपतिते तु निःशब्दं शान्तिधारणमेव कथयति।

उभावपि सम्प्रदायौ मरणानन्तरं शवं भूगर्भे निधाय मृदाच्छादितं कुरुतः, तद् मृदाच्छादितस्थानं 'कब्र' इति नाम्ना ख्यातम्। मृदाच्छादनानन्तरं तौ प्रार्थयतो यत्–तस्मै कृतकर्मणे आशीर्वादः ( सबाब ) प्राप्तो भवतु, तथा च जीवितेभ्यस्तद्वंशेभ्यः सुखमस्तु, इति। अतः परं सियासम्प्रदायः किञ्चिदपि न करोति।

सुन्नीसम्प्रदायः शवनिधापनानन्तरं तीजा-कर्म कुरुते, तृतीयदिने चतुर्थदिने वा दीनेभ्यः किञ्चिद् खाद्यवस्तु वितरति, यथेच्छं भोजयति वा तान्, स्ववंशजानपि भोजयति। तदनन्तरमेव केचन जनाः कुरानखानी-कर्म कुर्वन्ति। अर्थात् कुरान-

---

१. श्री गुरु ग्रन्थसाहब, पृ० १३३
२. श्री गुरु ग्रन्थसा०, पृ० १३६ आठवीं पंक्ति

ग्रन्थस्य त्रिंशत्खण्डेषु कतिचित् खण्डान् पठन्ति, यतस्तस्मै कुरानखानी-कर्मण आशीर्वादः ( सबाब ) प्राप्तोऽस्तु । ततश्चत्वारिंशत्तमदिने चत्वारिंशद्दिनानां मध्य एव वा 'चालीसवां' इति कर्म विदधति । तत्र हाफिजः ( पुरोहितः ) आगत्य कब्रसमीपे गृह एव वा कुरान-पाठं करोति । ते हाफिजाय किञ्चिद् ददति च । बकरीद-पर्वणः पूर्वं ते 'अरफा' कर्म कुर्वन्ति । तत्र दीनेभ्यो यवागू-करपट्टिकांश्च ददति, गृहसदस्येभ्यश्चापि । एतेन स मृतको मृतेषु पितृमेलनमिव सम्मिलितः, इति ज्ञात्वा प्रसीदन्ति ते ।

यवनसंस्कृतौ पीर-फकीराणां ( साधुभूतानाम् ) मृतगुरुजनानां वा प्रतिवर्षं वार्षिकोत्सवो भवति । एतद् वार्षिकं कर्म 'उर्स' इति कथ्यते । तस्मिन् उर्सोत्सव-समये शिष्याः वस्त्रमादाय स्कन्धोपरि घटं धृत्वा कब्र-पार्श्वे गच्छन्ति । वस्त्रेण कब्रमाच्छाद्य घटं तत्रैव पार्श्वे स्थापयन्ति किञ्चित् पठन्ति च । अजमेर-नगरे इयम् उर्सोत्सव-प्रथा बाहुल्येन भवति । अतः उत्सवः स 'अजमेर-शरीफ' इति कथ्यते । विहारादिप्रान्तेष्वपि ईदृशानि शरीफ-स्थानानि विद्यन्ते ।

मरणानन्तरम् एतावत्कार्येषु सत्सु यवना अपि आत्मानं नित्यमेव मन्यन्ते । आत्मानं 'अमरे रब्बी' ते कथयन्ति । 'अमरे रब्बी' इत्यस्य 'अल्लाह् का हुक्म' इत्यर्थो भवति । अर्थाद् भगवदिच्छयैव सर्वं भवति । केवलं भगवानेवामरः । आत्मनो नित्यत्वं च प्रदर्शितम् इस्लामधर्मे । तद्यथा—

"जिस तरह और जातियाँ रूह को आत्मा या स्प्रिट कहती हैं और उसको एक तरह का तत्त्व मानती हैं उस तरह इस्लाम इसको कोई शय या तत्त्व नहीं मानता । कुरान को रूह कहा गया और उसके लानेवाले दूत जिब्रैल को 'रुहुल अमीन' कहा गया । ईसा को 'रूह उल्लाह' कहा गया । इनमें से कोई भी एक इकाई नहीं है । बल्कि बहुत सी कारीगरी के बाद जिनको हम अभी तक समझ नहीं सके एक इकाई बनाया और उसको रूह कहा । कुरान बहुत से खियालात का मजमुवा है । जिब्रैल एक अलग निर्माणों में से है । ईसा एक नये ढंग की इन्शानी पैदाइश है और हम भी उसी तरह से हैं । मगर हममें और उनमें यह फर्क है कि वे कोई गलती नहीं करते, हम गलतियाँ करते हैं । इस लिये हम रूह नहीं कहे जा सकते । मोहम्मद साहब को न मानने वाले उनको नीचा दिखाने के लिये तरह-तरह के सवालात करते थे जिनका जबाब वे अल्लाह की तरफ से आये हुये आल्फाजों में देते थे ।

एक बार इन्हीं लोगों ने रूह के बारे में पूँछा तो अल्लाह की तरफ से जबाब आया 'वस अलूनक मेनर रूह कुलर रूह मिन अमरे रब्बी' ( कुरान-सिपारा १५, सूरेबनी इसराइल, रुकू ९ ) । अर्थात्—तुमसे रूह के बारे में सवाल करते हैं, कह दो कि रूह मेरे परवरदिगार के हुक्म से है, लेकिन तुमको अक्ल बहुत कम दिया गया ।'

तर्जुमा-कुरानशरीफ 'कुरान मजीद' ग्रन्थानुसारं चाप्यात्मनो नित्यत्वमित्थं वर्णितम् —

८२. सूर-हे-इन्फितार—

यह सूरते इन्फितार मक्के में उतरी, इसमें १९ आयतें और एक रुकू है,

शुरू खुदा का नाम लेकर जो बड़ा मेहरबान निहायत रहमवाला है।

( १ आयत ) जब आस्मान फट जाएगा। ( २ आयत ) और तारे झड़ पड़ेंगे। ( ३ आयत ) और जब दरिया बह कर एक दूसरे में मिल जायेंगे। ( ४ आयत ) और जब कब्रें उखेड़ दी जायेंगी। (५ आयत) तब हर शख्स मालूम कर लेगा कि उसने आगे क्या भेजा था और पीछे क्या छोड़ा था। ( ६ आयत ) ऐ इन्सान तुझको अपने पर्वरदिगार करम गस्तर के बाब में किस चीज ने धोखा दिया। ( ७ आ० ) वही तो है जिसने तुझे बनाया और ( तेरे आजा को ) ठीक किया और ( तेरे कामत को ) मौतदिल रखा। ( ८ आ० ) और जिस सूरत में चाहा तुझे जोड़ दिया। (९ आ०) मगर हैईयात तुम लोग जजा को झुटलाते हो। ( १० आ० ) हालाँ कि तुम पर निगैहबान मुकर्रर है। (११ आ०) आली कदर ( तुम्हार बातों के ) लिखने वाले। ( १२ आ० ) जो कुछ तुम करते हो वह उसे जानते हैं। (१३ आ०) बेशक नेकूकार नैयमतों (बहिश्त) में होगें। ( १४ आ० ) और बदकिर्दार दोजख में। ( १५ आ० ) ( यानी ) जजा के दिन उसमें दाखिल होंगे। ( १६ आ० ) और उससे छुप नहीं सकेंगे। ( १७ आ० ) और तुम्हें क्या मालूम कि जजा का दिन कैसा है। (१८ आ०) फिर तुम्हें क्या मालूम कि जजा का दिन कैसा है। (१९ आ०) जिस रोज कोई किसी का कुछ भला न कर सकेगा और हुक्म उस रोज सिर्फ खुदा का ही होगा। रुकू—१ ( तर्जुमा 'कुरान शरीफ' कुरान मजीद ( हिन्दी ) ग्रन्थे पारा ३०, ८२ सूर-हे-इन्फितार )।

एवं च जीवात्मनो नित्यत्वे कथिते हि मरणान्तरं जीवात्मनः सन्तुष्टचर्थं तत्कृतैः कर्मभिर्ज्ञायते यद् यवनानां मतेऽप्यवश्यमिदं श्राद्धं क्रियत एव। एतेनापि उपर्युक्तकर्मसमुदायेन आत्मनो नित्यत्वमेव साधितं भवतीति श्रद्धया दानभोजनादिभिः धर्मग्रन्थपाठादिभिश्च कर्मभिः सर्वं श्राद्धमेव क्रियत इति निश्चीयते।

**खीस्तीयसंस्कृतौ**—खीस्तीयजन-मरणानन्तरं शवं स्नापयित्वा, शुक्लवस्त्रनिर्मितानि कोटपतलूनादिसंज्ञकानि परिधानानि सन्धारयित्वा, केशं सुसंयोज्य भूमावेव शयितं तं शिरसा पादान्तं यावद् वस्त्रेणाच्छादयति परिजनः। ततः पुरोहितः ( पादरी ) ईशप्रार्थनां करोति। तदनन्तरं तं मञ्जूषायां स्वापयति। विवाहिते मृते सति मञ्जूषायां शुक्लवस्त्रास्तरणं क्रियते, बहिश्च कृष्णवस्त्रम्। अविवाहिते तु मञ्जूषान्तरे बहिश्चोभयत्र शुक्लवस्त्राच्छादनमेव विधीयते। शुक्लवस्त्रेण ज्ञायते यदयं सांसारिकप्रपञ्चैर्मुक्तः पवित्रो जनः। कब्रस्थानं प्रति नीयमानस्य तच्छवस्य पुरतः पुरोहितः ( पादरी ) शुक्लं स्वविशेषवस्त्रं परिधाय गलसंलग्नेन स्कन्धाभ्यां प्रलम्बितेन कृष्णवस्त्रोत्तरीयेण सह गच्छति। उच्चवंशजे भक्ते वा मृते

सति पूर्वोक्तरीत्यैव सुसज्जीकृत्य तन्मज्जूषा चर्चे (देवालये) संस्थाप्यते। सहगामिषु जनेषु यथास्थानमुपविष्टेष्वेव पुरोहित उत्थाय ईशप्रार्थनाया अर्धभागं प्रपठ्य पुनस्ततः कब्रस्थानं गच्छति। तत्र प्रार्थनाया अवशिष्टं भागं स पठति। तदनन्तरं भूमिगर्ते शवो निधाप्यते। तत्रैव एकस्यां पञ्जिकायाम् (व्यूरियल रजिस्टरे) मृतस्य नाम, वयः, तत्कृतं सेवाकर्मादि, कब्रस्थाननाम, कब्रपरिचयादि च सर्वं लिख्यते। ततश्च मुद्रितं प्रपत्रं वार्षिकविवरणसहितम् इलाहाबाद-प्रधान-कार्यालये प्रेषितं भवति, पुनश्च तत्रतः शासनाय प्रेष्यते। तदनन्तरं च तैर्न किञ्चिदन्यत् कर्म क्रियते। इत्थं च तेषां मते आत्मनोऽनित्यत्वेऽपि शववेषकरणादिभिः प्रार्थनादिभिश्च ज्ञायते यत्तैरपि किञ्चिच्छ्राद्धरूपं क्रियत एव। तथैव प्रोक्तं गरुडपुराणे—

न काष्ठे विद्यते देवः शिलायां न कदाचन।
भावे हि विद्यते देवस्तस्माद् भावं समाश्रयेत्॥[1]

आर्यसमाजसंस्कृतौ—श्रीदयानन्दसरस्वतीमतानुयायिनोऽपि मरणानन्तरं शान्तिकरं सुखकरं वात्मनो किञ्चिद् वेदपाठं हवनादिकं च विदधत्येव। अत अनेन विधिना आत्मनो नित्यत्वादेव पुनर्जन्मसिद्धिरप्यवतरति, तथा चेदृशभावमूलकं वेदपाठ–हवनादिकर्मैव श्राद्धमिति।

**पुनर्जन्मसिद्धिः**—वाराणस्यां हिन्दीभाषायाम् 'मानव' पत्रिकायाः १९५२ ईशाब्दीये प्रथमवर्षीय-द्वितीयाङ्के पुनर्जन्मविषयकं निम्नाङ्कितं लेखशीर्षकं प्रकाशितं विद्यते—

"मरने के बाद की स्थिति"

लेखोऽयम् "मानव" पत्रिकासम्पादकस्य। अस्यायं भावः—

सम्पादकमहोदयस्य वृद्धा मातामही पटनामण्डलान्तर्गत—मधवाग्रामनिवासिनी भाद्रपदमासस्य घोरान्धतमसि रात्रौ वर्षति मेघे ८ वादने पञ्चत्वं गता। तत्रतो गङ्गा नदी योजनत्रयमिता स्थिता विद्यते। समवेतजनैरुक्तं यत् प्रातरेव तत्र गमनं शोभनं स्यादिति। ततो वस्त्रेणाच्छादिता सा। प्रातः ४ वादनेऽष्टघण्टानन्तरं सा दीर्घनिःश्वसनं प्रारभदकथयच्च यद् बालकैस्तस्याः पृष्ठे नखैर्घाताः कृता इति। तत्पृष्ठावलोकनेन बहवोऽल्पगर्ता अपि तत्पृष्ठे दृष्टिगोचराः समभवन्।

तदनन्तरं तस्या इयमुक्तिरासीद् यद् यमदूतैर्नीयमानायास्तस्याः पार्श्वस्थेन निम्नमार्गेणापरेण तद्ग्रामस्थो मल्लिकनामा जनः शोणितसंलिप्तः पिपीलकैः (चिउँटा) शनैःशनैर्नीयमानो दीर्घनिःश्वसन् दृष्ट इति। यमस्य द्वारे तां परित्यज्य दूता यमाज्ञामाप्तुं यमपुरं प्रविष्टवन्तः। दूतेषु यमपुरं प्रविष्टेषु द्वारे संस्थितायास्तस्याः (मातामह्याः) पृष्ठे विकरालबालकैस्तीक्ष्णनखैर्घाताः कृताः। बालकानां तेषामियमुक्तिरासीत् यदस्माकं चाञ्चल्येन पूर्वं तया बह्वाक्रुष्टा

---

1. ग० पु०, प्रे० क० २७।२९

वयमिति। यमपुरे मातामहीविषयके दूतसंवादे विदिते सति कोलाहलो जातो यत् साम्प्रतमेतस्याश्चतुर्दश वर्षाणि यावदवशिष्टो जीवनकालः। एनां तद्गृहे शीघ्रं नय, तथा 'चण्ढोस' ग्रामाद् बरहिलनामानं जनमानय तत्कालमिति। ईदृशे मातामहीकथानके श्रुतेऽयं संवादः प्राप्तो यत् मल्लिको वृद्धाया मरणाद् घण्टाद्वयात् पूर्वमेव मृतस्तथा तस्या जीवनसम्पत्त्यनन्तरमेव चण्ढोस-ग्रामनिवासी बरहिलोऽपि मृतः। चण्ढोसग्रामस्ततः क्रोशपरिमितः स्थितो विद्यते। मातामह्याः स्थानसंकेतः—पं० श्रीकृष्णानन्दपाठकः, मधवा, सेहडा, पटना (विहार) इति। मानवपत्रिकायाः संपादकः—पं० लालविहारी मिश्रः, गोयनका-संस्कृत-कालेजः, वाराणसी।

"मानव" पत्रिकायाम् १९५३ ईशाब्दीयायां प्रथमवर्षीय-दशमसंख्याकायामन्यदपि पुनर्जन्मविषकं निम्नाङ्कितं लेखशीर्षकं प्रकाशितं विद्यते—

"पूर्व जन्म का हाल पाँच साल के बच्चे द्वारा"

अयमाशयः—फर्रुखाबाद–जनपदे श्रीबैजनाथटण्डनस्य गृहे मईमासस्य ७ दिनाङ्के १९४८ ईशाब्दे पुत्रो जातो य इदानीं पञ्चवर्षवयस्कः। जनवरी–मासस्य २१ दिनाङ्के १९४७ ईसाब्दे मृतं सीतापुर–नगरस्य नगरपालिकाध्यक्षं 'श्रीबैजनाथप्रसाद–मलहोत्रम्' आत्मानं स कथयति। तेनेदमपि कथितम्–अस्मिन् मदीये नवीनगृहे ते मम सेवकाः क्व सन्ति, मरणात् पूर्वं मया स्वपत्न्यै नवरत्नजटितमङ्गुलीयकं दत्तमासीत्, इति। इत्थम्भूते कर्णपरम्परया वार्ताप्रचारे जाते सीतापुर–नगरात् तत्पूर्वगृहस्यैकः सेवकस्तं द्रष्टुं समायातः। बालकेन स सम्यग् ज्ञातः। एतदनन्तरं पितृव्यः तद्भ्रातरश्चापि समायातास्तेन पूर्वपरिचिता एव परिज्ञाताः सर्वे। ततोऽप्रैलमासस्य १२ दिनाङ्के १९५३ ईसाव्दे स सीतापुर-नगरे समानीतः। तत्र स गृहे स्थापितदेवस्थाने स्थितेषु क्रीडनकेषु स्वक्रीतं कीडनकं परिचितवान्। कुञ्जिकागुच्छात् कुञ्जिकामादाय लौहमञ्जूषामप्युद्घाटितवान्। तस्य पत्नी तद्दत्तमङ्गुलीयकमपि दर्शितवती। एतदनन्तरं तेनोक्तं यदहं केवलं १८ वर्षार्थमेवागतो ऽत्रेति।

इत्थमनेकान्युदाहरणानि सन्ति। इमानि जीवात्मनो नित्यत्वे प्रत्यक्षप्रमाणानीति कृत्वा अदग्धे सति देहे किञ्चित् कालानन्तरमपि पुनर्जन्म शक्यमिति मन्तव्यमेव। अतः किञ्चित् कालमपेक्ष्यैव देहदाहः कर्तव्यो न तु शैघ्येण तत्कालमेवेति।

## मरणानन्तरं त्रिभिश्चतुर्भिर्वा मुहूर्तैर्यमद्वारादागत्यात्मा पुनः स्वमृत्युगेहे तिष्ठति

इत्थं स नित्यस्तैजसो विद्युद्रूप आत्मा देहत्यागकालेऽतिवेगेन देहान्निःसृत्य यमपुरस्थितस्य यमसंज्ञकस्य विद्युन्निर्मित-न्यायस्तम्भस्य विद्युदाकर्षकस्य यन्त्रविशेषस्य तीक्ष्णाकर्षणेन यमलोकं द्वाभ्यां मुहूर्ताभ्यां त्रिभिर्वा मुहूर्तैः

कन्दुक इवोत्प्लुत्य गच्छति। तत्र यावदावश्यककालमुषित्वा पुनर्मुहूर्तेनैकेन स्वस्थानमागच्छति। आयुःशेषेण स पुनर्जीवति, आयुःक्षयेण च स देहान्निर्गत एवातिक्षीणः सन् द्वादशदिनपर्यन्तं शक्तिसम्पत्त्यर्थं तत्र गृहे निवसति। तथा हि गरुडपुराणे—

तत्र तत्र पतच्छ्रान्तो मूर्च्छितः पुनरुत्थितः।
यथा पापीयसा नीतस्तमसा यमसादनम्॥
त्रिभिर्मुहूर्तेर्द्वाभ्यां वा नीयते तत्र मानवः।
प्रदर्शयन्ति दूतास्ता घोरा नरकयातनाः॥
मुहूर्तमात्रात् त्वरितं यमं वीक्ष्य भयं पुमान्।
यमाज्ञया समं दूतैः पुनरायाति रवेचरः॥
आगम्य वासनाबद्धो देहमिच्छन् यमानुगैः।
धृतः पाशेन रुदति क्षुत्तृड्भ्यां परिपीड़ितः॥[1]

इत्थं स जीवात्मातिक्षीणः पिण्डजलादेः सत्त्वं सोममिच्छन् अतिदुःखी भवति। सोमश्च कः पदार्थः, क्वचन तिष्ठतीत्युच्यते।

**अथ सोमपरिचयः—**

सूते अमृतम् इति विग्रहे षूङ् प्राणिगर्भविमोचने धातोः कर्तरि—१४५ अर्तिस्तुसुहुसृधृक्षिक्षुभायावापदियक्षिनीभ्यो मन् (१।१४५) इत्युणादिसूत्रेण मन्। सार्वधातुकेति गुणः। इत्यमृतोत्पादकः सोमः। तथा च हैमः—

..............................सोमस्त्वोषधीतद्रसेन्दुषु॥
दिव्यौषध्यां घनसारे समीरे पितृदैवते।
वसुप्रभेदे सलिले वानरे किन्नरेश्वरे॥ इति।[2]

एवमेव शब्दकल्पद्रुमपञ्चमभागे ओषधीषु वा जीवेष्वन्येषु वा जीवनदायको विशेष-रस एवोपवर्णितः।

तथा च वाराहपुराणे सोमोत्पत्तिरहस्यनामाध्याये—
महातपा ऊचुः

ब्रह्मणो मानसः पुत्रः अत्रिर्नाम महातपाः।
तस्य पुत्रोऽभवत् सोमो दक्षजामातृतां गतः॥
सप्तविंशतिर्याः कन्या दाक्षायण्यः प्रकीर्तिताः।
सोमपत्न्योऽपि मान्यास्तास्तासां श्रेष्ठा तु रोहिणी॥
तामेव रमते सोमः नेतरा इति शुश्रुम।
इतराः प्रोचुरागत्य चन्द्रस्यासमतां पितुः॥

१. ग० पु० प्रे० क० १।३६-४२ २. २।३४५-४६

दक्षोऽप्यसकृदागत्य तमुवाच स नाकरोत् ।
समतां सोऽपि तं दक्षः शशापान्तर्हितो भव ॥
एवमुक्तः क्षयं सोमो अगमद् दक्षशापतः ।
देवा मनुष्याः पशवो नष्टे सोमे सवीरुधः ॥
क्षीणाभवंस्तदा सर्वा ओषध्यश्च विशेषतः ।
क्षयं गच्छद्भिरत्यर्थमोषधीभिः सुरर्षभाः ॥
मूलेषु वीरुधां सोमः स्थित इत्यूचुरातुराः ।
तेषां चिन्ताऽभवत् तीव्रा विष्णुं च शरणं ययुः ॥
भगवानाह तान् सर्वान् ब्रूत किं क्रियते मया ।
ते चाहुर्देव दक्षेण शप्तः सोमो विनाशितः ॥
तानुवाच तदा देवो मथ्यतां कलसोदधिः ।
ओषध्यः सर्वतो देवाः प्रक्षिप्याम्बुषु संयतैः ॥
एवमुक्त्वा ततो देवान् दध्यौ रुद्रं हरिः स्वयम् ।
ब्रह्माणं च तथा दध्यौ त्रासुकिं नेत्रकारणात् ॥
ते सर्वे तत्र सहिता ममन्थुर्वरुणालयम् ।
तस्मिंस्तु मथिते जातः पुनः सोमो महीपते ॥
योऽसौ क्षेत्रज्ञसंज्ञो वै देहेऽस्मिन् पुरुषः परः ।
स एव सोमो मन्तव्यो देहिनां जीवसंज्ञकः ॥
परेच्छया स मूर्त्ति तु पृथक् सौम्यां प्रपेदिवान् ।
तमेव देवमनुजाः षोडशेमाश्च देवताः ॥
उपजीवन्ति वृक्षाश्च तथैवौषधयः प्रभुम् ।
रुद्रस्तमेव सकलं दधार शिरसा तदा ॥
तदात्मिका भवन्त्यापो विश्वमूर्तिरसौ स्मृतः ।
तस्य ब्रह्मा ददौ प्रीतः पौर्णमासीतिथिं प्रभुः ॥
तस्यामुपोषयेद् राजन् तमर्थं प्रतिपादयेत् ।
स चान्नाहारश्च भवेत् तस्य ज्ञानं प्रयच्छति ॥
कान्ति पुष्टिं च राजेन्द्र धनं धान्यं च केवलम् ॥ इति ।[1]

अनेनोपवर्णनेन मिश्रितरसं मध्विव सर्वौषधीनां सत्त्वरूपोऽयं शीततमो जीवनदायको रसविशेष एव सोमः सिद्धो येनौषधयः सर्वे जीवाश्च जीवन्ति । अत एव सोमस्यैव अमृतत्वं वर्णितं ब्रह्मपुराणे—

अमृतं गौतमीवारि अमृतं स्वर्णमुच्यते ।
अमृतं गोभवं चाऽऽज्यममृतं सोम एव च ॥ इति ।[2]

"सर्वमापोमयं जगत्" इति श्रुत्या सृष्टयादौ जलस्यैव स्थितिः प्रदर्शिता ।

'चन्द्रमा अप्स्वन्तरा सुपर्णो धावते दिवि' इति श्रुत्या च चन्द्रस्य जलान्तर्गतस्य सततधावनं वर्णितम् । सूर्यस्याग्नेश्चोत्पत्तिर्जल एवोक्तम् ।

---

१. शब्दकल्पद्रुमे पञ्चमभागे  २. ब्र० पु० १३३।१६

'हिरण्यवर्णाः शुचयः पावका या सुजातः सविता या स्वातिः' (अथर्व० १।६।३३।१ ) इति ।

'असूर्या उप सूर्ये याभिर्वा सूर्यः सह, ता नो हिन्वन्त्वध्वरम्' इति मन्त्रेण सूर्यसमीपे जलस्थितिर्वर्णिता ।

अतिशीतत्वादेव चन्द्रस्यापरं नाम 'सोमः' इति हि प्रसिद्धमेव । 'शीतस्पर्शवत्यापः' इत्यन्नम्भट्टविद्वद्वरेण नैयायिकशिरोमणिना जलस्य शीतस्पर्शो गुण उक्तः । अधुनापि अतिशीतस्पर्शवतां हिमादीनां कार्कश्यात् प्रत्यक्षीक्रियते तद्गुणस्तस्य । एतैः प्रकारैश्च ज्ञायते यत् सोमः ( सोमरसः ) कश्चनातिशीतस्पर्शवान् जीवनदायको विशेषपदार्थोऽस्ति, यं सूर्याग्निचन्द्रादयो विशेषमीहन्ते, तेषां समीपे जलसत्तातिशयतोक्तत्वात् । स सोमपदार्थो जले बहुलतया विद्यत इत्यपि सिद्धम् । पितरोऽपि बलाधिक्याय तं सोममधिकमिच्छन्ति । अत एव ऋग्वेदे वर्णितम्—

ये नः पूर्वे पितरः सोम्यासोऽनूहिरे सोमपीथं वसिष्ठाः ।
तेभिर्यमः संरराणो हवींष्युशन्नुशद्भिः प्रतिकाममत्तु ।। इति ।[1]

शीतकिरणाः सूर्ये स्थिताः समुद्र-कूपादिजलेषु सर्वत्र सम्मिश्रिता आह्लादकत्वाच्चन्द्रपदेनोक्ताः । त एव किरणाः सोमपदवाच्याः । तथैव कूर्मपुराणस्योत्तरार्धे द्वितीयाध्याये प्रोक्तम्—

एवं सूर्यप्रभावेण सर्वा नक्षत्रतारकाः ।
वर्धन्ते वर्धिता नित्यं नित्यमाप्याययन्ति च ।।
दिव्यानां पार्थिवानां च नैशानां चैव सर्वशः ।
आदानान्नित्यमादित्यस्तेजसां तमसां प्रभुः ।।
आदत्ते स तु नाडीनां सहस्रेण समं ततः ।
नादेयांश्च सामुद्रान् कूप्यांश्चैव सहस्रदृक् ।।
स्थावराञ् जङ्गमांश्चैव यच्च कुल्यादिकं पयः ।
तस्य रश्मिसहस्रं तच्छीतवर्षोष्णनिस्रवम् ।।
तासां चतुःशतं नाड्यो वर्षन्ते चित्रमूर्तयः ।
वन्दनाश्चैव याज्याश्च केतना भूतनास्तथा ।।
अमृता नाम ताः सर्वा रश्मयो वृष्टिसर्जनाः ।
चन्द्रास्ता नामतः सर्वाः पीताभाः स्युर्गभस्तयः ।। इति ।[2]

हविष्ये सोमसत्त्वादेव तल्लिप्सया महासुरः शुम्भो देवयज्ञभागानपि बलपूर्वकं समाश्नात् । तथोक्तं दुर्गासप्तशत्यां पञ्चमाध्याये —

मम त्रैलोक्यमखिलं मम देवा वशानुगाः ।
यज्ञभागानहं सर्वानुपाश्नामि पृथक् पृथक् ।। इति ।[3]

---

१. ऋ० १०।१।८ २. कू० पु० उत्तरा० २।८–१३ ३. दु० स० ५।१०८

अतः पितरः कुशान् पालाशांश्च बहु समीहन्ते। यतः कुशेषु पालाशेषु चातिशीतत्वमनुभूयते। अत एवैते ग्रीष्मकालेऽपि सोमाधिक्यात् प्रफुल्लिताः सन्ति। व्रीहि-यव-श्यामाकेष्वपि सोमोऽधिको भवति। अतस्तेषामेव पिण्डपाकः क्रियते। सोमसत्वादेव पिण्डोपरि जलधारा दुग्धधारा च दीयेते। तिलेष्वपि सोमरसाधिक्यमस्ति। सोमः सर्वविधौष्ण्यं शाम्यति। अत एव शार्ङ्गधरेण सर्वविधज्वरशमनार्थं शार्ङ्गधरसंहितायामुक्तमङ्गारतैलम्—

मूर्वा लाक्षा हरिद्रे द्वे मञ्जिष्ठा सेन्द्रवारुणी।
बृहती सैन्धवं कुष्ठं रास्ना मांसी शतावरी॥
आरनालाढके तत्र तैलप्रस्थं विपाचयेत्।
तैलमङ्गारकं नाम सर्वज्वरविमोक्षणम्॥ इति।[1]

अङ्गानि इर्यति (पीनानि करोति) वर्धयति वेति विग्रहे-अङ्गोपपदाद् ऋ गतौ धातोः कर्तरि-कर्मण्यण् (३।२।१) इत्यण्। अचो ञ्णितीति वृद्धिः। रपरत्वम्। यद्वा-अङ्गतीति विग्रहे अगि गतौ धातोः कर्तरि-४२१ अङ्गिमदिमन्दिभ्य आरन् (३।१३०) इत्युणादिसूत्रेण आरन् प्रत्ययः। इदितो नुम् धातोरिति नुमागमः। अङ्गारम्-उल्मुकम्, वर्धकं वा। अङ्गारम् इवेति विग्रहे-इवे प्रतिकृतौ (५।३।९६) सूत्रेण कन्। अङ्गारकम्=अङ्गवर्धकमित्यर्थो ज्ञेयः।

तिलस्य विकार इति तिलशब्दाद् विकारार्थे—तस्य विकारः (४।३।१३४) सूत्रेण अण्। तद्धितेष्विति आदिवृद्धिः। यस्येति चेति अकारलोपे तैलमिति सिद्ध्यति। अतोऽत्र तैलपदेन तिलतैलमेव गृह्यते। शार्ङ्गधरविदुषा तु देहे यत्र जलनाडी वहति तत्र देहदक्षिणभागे यकृत्समीपे जलनाडीमूले तिलनामकस्य स्थानस्य वर्णनं कृतम्। तत्तिलं क्लोम कथ्यते। तत् तिलमतिशीतत्वात् पिपासामाच्छादयति। तथैवोक्तं शार्ङ्गधरसंहितायाम्--

जलवाहिशिरामूलं तृष्णाच्छादनकं तिलम्।
वृक्कौ पुष्टिकरौ प्रोक्तौ जठरस्थस्य मेदसः॥[2] इति।

एतेनेदं ज्ञायते यदयमात्मा सोमरसेन बलवानवश्यं भवतीति तमेवाकर्षत्यतिवेगेन। एतेनेदमप्यवबुध्यते यत् सोमरसेनैव विद्युदुत्पत्तिर्भवति। अत एवोक्तम् ऋग्वेदे—

उपहूताः पितरः सोम्यासो बर्हिष्येषु निधिषु प्रियेषु।
त आ गमन्तु त इह श्रुवन्त्वधि ब्रुवन्तु तेऽवन्त्वस्मान्॥ इति।[3]

**पुण्यं पापं चाऽप्यात्मनः सबलत्वे निर्बलत्वे वा कारणम्**—सोमरसातिरिक्तं स्वीयं पुण्यं पापं वापि तस्य विद्युद्रूपस्य शब्दब्रह्मांशस्यात्मनः सबलत्वे निर्बलत्वे वा कारणं भवति। शब्देन ध्वनिर्ज्ञायत इति महाभाष्ये वैयाकरणशिरोमणिना पतञ्जलिमहर्षिणा विशदीकृतम् १९४६ वैक्रमसंवत्सरीयसंस्करणे। तद् यथा—

---

१. शा० सं०, २ खं० ९। ६७ २. शा० सं०, १ खं० ५।४० ३. ऋ० १०।१५।५

"कस्तर्हि शब्दः ? येनोच्चारितेन सास्नालाङ्गूलककुदखुरविषाणिनां संप्रत्ययो भवति स शब्दः । अथवा प्रतीतपदार्थको लोके ध्वनिः शब्द इत्युच्यते । तद्यथा शब्दं कुरु, मा शब्दं कार्षीः, शब्दकार्ययं माणवक इति ध्वनिं कुर्वन्नेवमुच्यते । तस्माद् ध्वनिः शब्दः ॥" इति ।[१]

शब्दस्य नित्यत्वं चापि वर्णितं तत्रैव । तद् यथा—

"कथं पुनरिदं भगवतः पाणिनेराचार्यस्य लक्षणं प्रवृत्तम् ( अर्थात् शब्दानित्यत्वात् शब्दे नष्टे सति तत्र कथं सूत्रं प्रवर्तत इति भावः ) ? सिद्धे शब्दार्थसम्बन्धे । सिद्धे शब्देऽर्थे सम्बन्धे चेति । अथ सिद्धशब्दस्य कः पदार्थः ? नित्यपर्यायवाची सिद्धशब्दः । कथं ज्ञायते ? यत् कूटस्थेष्वविचालिषु भावेषु वर्तते ( अर्थाद् योऽविचलितः स सिद्ध इति सिद्धशब्दार्थः ) ॥ इति ।[२]

तथैव प्रोक्तं वाक्यपदीये—

नित्याः शब्दार्थसम्बन्धाः समाम्नाता महर्षिभिः ।
सूत्राणां सानुतन्त्राणां भाष्याणां च प्रणेतृभिः ॥ इति ।[३]

समाम्नाताः=ब्रह्मणि व्याप्ताः, ब्रह्मनित्यत्वमिव नित्यत्वादित्यर्थः ।

शब्दानां ( ध्वनीनां ) नित्यत्वादेव 'ट्राञ्जिष्टर-टेलीफोन' इत्याद्याधुनिकयन्त्रैः सुदूरेऽपि स्थाने श्रावणप्रत्यक्षं विधीयते । किन्त्वेतत्सर्वातिरिक्तं साधुशब्देन पुण्यमसाधुशब्देन च पापं भवतीत्यपि विस्पष्टमेव । तथा चाह महाभाष्ये पतञ्जलिः—

दुष्टः शब्दः स्वरतो वर्णतो वा
मिथ्या प्रयुक्तो न तमर्थमाह ।
स वाग्वज्रो यजमानं हिनस्ति
यथेन्द्रशत्रुः स्वरतोऽपराधात् ॥ इति ।[४]

अर्थाद् दुष्टशब्दप्रयोगाद् बलहानिर्भवति । तथोक्तं महाभाष्ये—

यो ह्यजानन् वै ब्राह्मणं हन्यात् सुरां वा पिबेत् सोऽपि मन्ये पतितः स्यात् । एवं तर्हि, सोऽनन्तमाप्नोति जयं परत्र वाग्योगविद्, दुष्यति चापशब्दैः ॥ इति ।[५]

अस्यायमाशयो यद् ज्ञानावस्थायामज्ञानावस्थायां वा ब्राह्मणवधकर्ता सुरापानकर्ता बा यथा पतितो भवति, तथैव प्रयुक्तेन साधुशब्देन पुण्यमसाधुशब्देन च पापं भवति । इत्थं च स्वरसत एव साधुशब्दप्रयोगफलेन सुखदपुण्यरसेनात्मा सबलो भवति, असाधुशब्दप्रयोगफलेन पापभारेण च निर्बलो भूत्वा पतत्येव । अतः पापप्रयोजकशब्दादिकार्याणि वर्जयेदिति । वाक्यपदीयेऽप्येषा शब्दशक्तिरुक्ता—

---

१. म० भा०, पस्पश० पृ० ३
२. म० भा० पस्पश० पृ० १३
३. वा० प०, ब्र० का० २३
४. म० भा०, पस्पश० पृ० ५
५. म० भा० पस्पश० पृ० ६

शब्देष्वेवाश्रिता शक्तिर्विश्वस्यास्य निबन्धनी।
यन्नेत्रः प्रतिभात्माऽयं भेदरूपः प्रतीयते ॥ इति।[१]

नेत्रम् ( प्रकाशकम् ) अस्त्यस्येति अर्श आदिभ्योऽच्। यस्या नेत्रः प्रकाशक इति षष्ठीसमासः।

पुण्यपापभागित्वं च सर्वविधजातीनां समम्। तथैवोक्तं वाक्यपदीयब्रह्मकाण्डे—

इदं पुण्यमिदं पापमित्येतस्मिन् पदद्वये।
आचण्डालं मनुष्याणां समं शास्त्रप्रयोजनम् ॥ इति।[२]

तथा च शब्दब्रह्मज्ञानादेवात्मा ब्रह्मसायुज्यं ( ब्रह्म मोक्षं वा ) प्राप्नोतीत्यप्युक्तं तत्र वाक्यपदीये—

अपि प्रयोक्तुरात्मानं शब्दमन्तरवस्थितम्।
प्राहुर्महान्तमृषभं येन सायुज्यमिष्यते ॥ इति।[३]

अत एवेयं श्रुतिरपि संगच्छते 'स यो ह वै तत् परमं ब्रह्म वेद ब्रह्मैव भवति' इति। अर्थाच्छब्दरूप-परमब्रह्मवेत्ता ब्रह्मण्येव लीयते। इत्थमेव शब्दानामाकाशे स्थितत्वान्नित्यत्वाच्च वेदानामपौरुषेयत्वमपि सुतरां सिद्धयति। शब्दनित्यत्वादेव वेदानां निःशेषशब्दा अनादिकालादेवाकाशे संस्थिता एव। सशक्तैर्महर्षिभिस्तानावश्यकतानुसारमाकृष्य महान्तो विशिष्टग्रन्था निर्मिताः। तान् ग्रन्थानवलोक्य वेदेषु पौरुषेयत्वभ्रान्तिर्लोकानां भवति।

अत एव शब्दनित्यत्वपक्षं चाश्रित्य श्राद्धाधिकारिणां सान्निध्येऽद्यापि केचन विद्वांसोऽक्षरचक्रं विशेषयन्त्रं निर्माय तेषां पितॄनाहूय तैः सह वार्तां कारयन्तीति तत्तल्लोकस्थात्मनो नित्यत्वे प्रत्यक्षप्रमाणमप्यवधेयमिति। अनया दिशा महाभारतादौ वर्णितजनानां कृष्णादीनामद्यापि नभःस्थितानि वचांसि विशिष्टकलाविद्वैज्ञानिकानां विशेषयन्त्रैस्तच्छ्राद्धाधिकारिसान्निध्यादेव समाकर्षणयोग्यानि सन्तीति प्रतीयते। अत एव जनानां गोत्रप्रवरादयोऽप्यत्यन्तमहत्त्वकराः सन्तीत्यपि विज्ञेयम्। यथा तेषामेव गोत्रप्रवराणां शब्दाः ( ध्वनयः ) समाकृष्टाः स्युरिति।

इत्थमेव ऋग्यजुःसामत्रयी रूपा शुम्भनिशुम्भादिमहासुरनिघातिनी शब्दशक्तिस्वरूपा देवी वर्णिता श्रीदुर्गासप्तशत्याम्—

शब्दात्मिका सुविमलर्ग्यजुषां निधान-
मुद्गीथरम्यपदपाठवतां च साम्नाम्।
देवि त्रयी भगवती भव भावनाय
वार्ता च सर्वजगतां परमार्तिहन्त्री ॥ इति।[४]

अत्र त्रयी वार्तापदेन त्रयी वाग्रूपा सा देवी बोध्या।

---

१. वा० प०, ब्र० का० ११९ २. वा० प०, ब्र० का० ४०
३. वा० प०, ब्र० का० १३२ ४. दु० स० ४।१०

सर्वेषां सुराणां तृप्त्यर्थं सा यज्ञेषु स्वाहारूपा, पितृणां च तृप्त्यर्थं श्राद्धेषु स्वधारूपा वर्णिता—

यस्याः समस्तसुरता समुदीरणेन
तृप्तिं प्रयाति सकलेषु मखेषु देवि।
स्वाहाऽसि वै पितृगणस्य च तृप्तिहेतु-
रुच्चार्यसे त्वमत एव जनैः स्वधा च॥ इति।[1]

तथा चासुरान् हत्वा सर्वजनहितकरानुपायांश्चोक्त्वा सर्वदेवानां समक्षमेव सा देवी शब्दरूपशक्तिराकाशे शब्दब्रह्मणो निःसृता सती तत्रैवालीयत। तथा चोपवर्णितं श्री दुर्गासप्तशत्याम्—

इत्युक्त्वा सा भगवती चण्डिका चण्डविक्रमा।
पश्यतां सर्वदेवानां तत्रैवान्तरधीयत॥ इति।[2]



१. दु० स० ४।८ २. दु० स० १२।३२

# द्वितीयालोकः

## अथ लोकवर्णनम्

स वै नित्यात्मा देहान्निर्गत्य पुनर्जन्मोपलभ्य वा कस्मिंश्चिल्लोकेऽवश्यं यास्यतीति कृत्वा चतुर्दशलोकानां वर्णनमिदानीं क्रियते। तत्र सूर्यचन्द्रयोः किरणैर्भूम्यादयो नदीसागरादयश्च यावत्पदार्थाः प्रकाश्यन्ते तावती पृथ्वी, तावदेवाकाशं च कथ्येते। तथा चोपवर्णितं ब्रह्मपुराणे—

**पृथ्वीपरिमाणम्**

रविचन्द्रमसोर्यावन् मयूखैरवभास्यते।
ससमुद्रसरिच्छैला तावती पृथिवी स्मृता॥ इति।[1]

**आकाशपरिमाणम्**

यावत्प्रमाणा पृथिवी विस्तारपरिमण्डला।
नभस्तावत्प्रमाणं हि विस्तारपरिमण्डलम्॥ इति।[2]

**पृथिव्या उच्छ्रायः ( उच्चता )**

विस्तार एष कथितः पृथिव्या मुनिसत्तमाः।
सप्ततिस्तु सहस्राणि तदुच्छ्रायोऽपि कथ्यते॥ इति।[3]

**सप्तपातालपरिमाणम्**—पृथिव्याकाशयोः परिमाणे पृथिव्या उच्छ्रायश्च, सप्ततिसहस्राणि ( ७०,००० ) योजनानीत्युक्त्वेदानीं सप्तपातालवर्णनं क्रियते। तत्र पृथिव्या अधः प्रत्येकपातालपरिमाणं दशसाहस्रम्। इत्थं च सप्तपातालपरिमाणं समष्टौ सप्ततिसहस्राणि ( ७०,००० ) योजनानीति। तथाहि—

दशसाहस्रमेकैकं पातालं मुनिसत्तमाः।
अतलं वितलं चैव नितलं सुतलं तथा॥
तलातलं रसातलं पातालं चापि सप्तमम्।
कृष्णा शुक्लारुणा पीता शर्करा शैलकाञ्चनी॥
भूमयो यत्र विप्रेन्द्राः वरप्रासादशोभिताः।
तेषु दानवदैतेय-जातयः शतशः स्थिताः॥ इति।[4]

ब्रह्मवैवर्तपुराणस्य ब्रह्मखण्डे तु मेरुपर्वतस्य क्रमशोऽष्टश्रृङ्गेष्वष्टलोका उक्ताः। तत्र ध्रुवलोकं परित्यज्य ब्रह्मलोकपर्यन्ताः सप्त स्वर्गा वर्णितास्तथा मेरोर्मूलादधः सप्त पातालाः। तथा हि ब्रह्मवैवर्तपुराणे—

मेरोरष्टसु श्रृङ्गेषु ससृजेऽष्टौ पुरीः प्रभुः।
अष्टानां लोकपालानां विहाराय मनोहराः॥

---

१. ब्र० पु० २३।३ २, ब्र० पु० २३।४ ३, ब्र० पु०, २१।१ ४. ब्र० पु० २१।२-४

मूलेऽनन्तस्य नगरीं निर्माय जगतां पतिः ।
ऊर्ध्वे स्वर्गाश्च सप्तैव तेषामाख्यां निशामय ।।
भूर्लोकं च भुवर्लोकं स्वर्लोकं सुमनोहरम् ।
जनलोकं तपोलोकं सत्यलोकं च शौनक ।।
शृङ्गमूर्ध्नि ब्रह्मलोकं जरादिपरिर्वाजितम् ।
तदूर्ध्वे ध्रुवलोकं च सर्वतः सुमनोहरम् ।।
तदधः सप्तपातालान् निर्ममे जगदीश्वरः ।
स्वर्गातिरिक्तभोगाढ्यानधोऽधः क्रमतो मुने ।।
अतलं वितलं चैव सुतलं च तलातलम् ।
महातलं च पातालं रसातलमधस्ततः ।।[1]

यद्यपि मेरुपर्वते विविधानन्दसुखादयः प्रतीयन्ते तथापि चन्द्रादिनक्षत्रलोकादिषु दृश्यमानेषु विशिष्टवैज्ञानिकादीनां चन्द्रादिलोकान्वेषणकर्मसु सत्स्वपि अन्यान्यलोकविवेचनं सुकरं न सम्भवतीति ।

**गोलोकः**—भूर्लोक-भुवर्लोक-स्वर्लोकादुत्तरम् अर्थाद् ध्रुवलोकानन्तरमुपरि मण्डलाकृतौ त्रिकोटियोजनानि ( ३,००,००,००० ) यावद् विस्तीर्णो ज्योतीरूपो गोलोकः संस्थितः । तत्र परब्रह्म परमात्मा स्वनित्यत्वमनुभवति । स लोकोऽदृश्यः सन् योगिनां ज्ञानचक्षुषा दृश्यः, विष्णुपरायणैरपि दृश्यो गम्यश्च । तथा चोक्तं ब्रह्मवैवर्तपुराणे —

यत् श्रुतं व्यासवक्त्रेण ब्रह्मखण्डमनुत्तमम् ।
अज्ञानान्धतमोध्वंसि ज्ञानवर्त्मप्रदीपकम् ।।
ज्योतिःसमूहं प्रलये पुरासीत् केवलं द्विज ।
सूर्यकोटिप्रभं नित्यमसंख्यविश्वकारणम् ।।
स्वेच्छामयस्य च विभोस्तज्ज्योतिरुज्वलं महत् ।
ज्योतिरभ्यन्तरे लोक-त्रयमेव मनोहरम् ।।
तेषामुपरि गोलोकं नित्यमीश्वरवद् द्विज ।
त्रिकोटियोजनायाम-विस्तीर्णं मण्डलाकृति ।।
तेजःस्वरूपं सुमहद् रत्नभूमिमयं परम् ।
अदृश्यं योगिभिः स्वप्ने दृश्यं गम्यं च वैष्णवैः ।।[2]

**वैकुण्ठपुरं शिवलोकश्च**—गोलोको वैकुण्ठपुराच्छिवलोकाद् वाऽधो विद्यते। गोलोकादुपरि पञ्चाशत्कोटियोजनमितस्य सत्यलोकस्य अधोभागे दक्षिणदेशे मण्डलाकृतौ एककोटियोजनानि ( १,००,००,००० ) यावद् वैकुण्ठपुरं विस्तृतम् । तत् प्रलयकाले शून्यं भवति, सृष्टौ च तत्र विष्णुः संतिष्ठते । तदुपरि वामभागे मण्डलाकृतौ एककोटियोजनानि यावत् शिवलोको विस्तीर्णः । सोऽपि प्रलयकाले

---

१ ब्र० वै० पु०, ब्रह्म ख० ७।८-१३ २. ब्र० वै० पु०, ब्रह्म ख० २।३-७

शून्यः, सृष्टौ च तत्र शिवः सानन्दो विश्रमते । तथा च ब्रह्मवैवर्तपुराणस्य ब्रह्मखण्डे वर्णितम् —

तदधो दक्षिणे सव्ये पञ्चाशत्कोटियोजनात् ।
वैकुण्ठं शिवलोकं च तत्समं सुमनोहरम् ॥
कोटियोजनविस्तीर्णं वैकुण्ठं मण्डलाकृति ।
लये शून्यं च सृष्टौ च लक्ष्मीनारायणान्वितम् ॥
चतुर्भुजैः पार्षदैश्च जरामृत्य्वादिवर्जितम् ।
सव्ये च शिवलोकं च कोटियोजनविस्तृतम् ॥
लये शून्यं च सृष्टौ च सपार्षदशिवान्वितम् ।
गोलोकाभ्यन्तरे ज्योतिरतीव सुमनोहरम् ॥
परमाह्लादकं शश्वत् परमानन्दकारणम् ।
ध्यायन्ते योगिनः शश्वद् योगेन ज्ञानचक्षुषा ॥[1]

**सूर्यलोकश्चन्द्रलोकश्च**—सूर्यलोकश्चन्द्रलोकश्च मण्डलाकारः । पृथिव्या उच्छ्रायः ३४ पृष्ठे सप्ततिसहस्रयोजनमित उक्तः । तदुपरि लक्षैकयोजनमितो मण्डलाकृतौ सूर्यलोकः, तदुपरि लक्षैकयोजनमितः ( १,००,००० ) मण्डलाकृतौ चन्द्रलोकः । तथा च वर्णितं ब्रह्मपुराणे—

भूमेर्योजनलक्षे तु सौरं विप्रास्तु मण्डलम् ।
लक्षे दिवाकराच्चापि मण्डलं शशिनः स्थितम् ॥[2]

**सम्पूर्णनक्षत्रमण्डलम्**—चन्द्रलोकादुपरि पूर्वस्मिन् भागे लक्षैकयोजनपर्यन्तं ( १,००,००० ) समस्तनक्षत्राणां मण्डलं प्रकाशितं विद्यते । तथा चोक्तम्—

पूर्वे शतसहस्रे तु योजनानां निशाकरात् ।
नक्षत्रमण्डलं कृत्स्नमुपरिष्टात् प्रकाशते ॥[3]

**बुधग्रहः शुक्रग्रहश्च**—नक्षत्रमण्डलादुत्तरे भागे उपरि लक्षद्वययोजनमितं (२,००,०००) बुधस्थानं तदुपरि लक्षद्वययोजनमितं (२,००,००० ) च शुक्रस्थानमस्ति । तदुक्तं ब्रह्मपुराणे—

द्विलक्षे चोत्तरे विप्रा बुधो नक्षत्रमण्डलात् ।
तावत्प्रमाणभागे तु बुधस्याप्युशनाः स्थितः ॥[4]

**मङ्गलग्रहो बृहस्पतिश्च**—शुक्रग्रहादुपरि द्विलक्षयोजनाद् (२,००,०००) मङ्गलग्रहस्तिष्ठति, ततो मङ्गलग्रहादाकाशे द्विलक्षयोजनपर्यन्तं (२,००,०००) बृहस्पतिर्विराजते । तथोपवर्णितम्—

अङ्गारकोऽपि शुक्रस्य तत्प्रमाणे व्यवस्थितः ।
लक्षद्वयेन भौमस्य स्थितो देवपुरोहितः ॥[5]

---

१. ब्र० वै० पु०, ब्रह्म ख० २।१०-१४ २. ब्र० पु०, २३।५ ३. ब्र० पु०, २३।६
४. ब्र० पु०, २३।७ ५. ब्र० पु०, २३।८

**शनिग्रहः सप्तर्षिमण्डलं च**—बृहस्पतेरुपरि द्विलक्षयोजनपर्यन्तं (२,००,०००) शनिग्रहः, ततः शनेरुपरि लक्षैकयोजनपर्यन्तं ( १,००,००० ) सप्तर्षिमण्डलम् । तथोक्तम्—

सौरिर्बृहस्पतेरूर्ध्वं द्विलक्षे समवस्थितः ।
सप्तर्षिमण्डलं तस्माल्लक्षमेकं द्विजोत्तमाः ॥[1]

**ध्रुवलोकः**—सप्तर्षिमण्डलादुपरि लक्षैकयोजनानि यावत् ( १,००,००० ) समस्तनक्षत्राणां चक्रस्वरूपस्य मेण्ढकोपक्रमस्थितौ ध्रुवलोकस्य स्थितिः । तथैवोक्तं ब्रह्मपुराणे—

ऋषिभ्यस्तु सहस्राणां शतादूर्ध्वं व्यवस्थितः ।
मेढीभूतः समस्तस्य ज्योतिश्चक्रस्य वै ध्रुवः ॥[2]

**त्रैलोक्यम्**—त्रयो लोका एवेति त्रिलोकशब्दात् स्वार्थे ( चतुर्वर्णादीनां स्वार्थं उपसंख्यानम् ७।३।३१ ) वार्तिकेन ष्यञ् । इति त्रैलोक्यशब्दात् त्रिलोकाः= भूर्लोकः, स्वर्लोकः, पाताललोकश्चेति विज्ञेयाः ।

इदानीं त्रयो लोकाः के ? इति प्रश्ने पृथिव्या आरम्भाद् ध्रुवलोकपर्यन्तं यदुपर्युक्तं तत् लोकत्रयमिति समाधीयते । याजकैरेव तत् प्राप्यते । अग्रे च तदेव स्पष्टीक्रियते । तथा हि प्रोक्तम्—

त्रैलोक्यमेतत् कथितं संक्षेपेण द्विजोत्तमाः ।
इज्याफलस्य भूरेषा इज्या चात्र प्रतिष्ठिता ॥[3]

**महर्लोकः**—ध्रुवलोकादुपरि एककोटियोजनानि ( १,००,००,००० ) यावन् महर्लोकः प्रख्यापितः । तत्र कल्पवासिनस्तीर्थपर्यटकाः सन्तिष्ठन्ते । तथा च वर्णितम्—

ध्रुवादूर्ध्वं महर्लोको यत्र ते कल्पवासिनः ।
एकयोजनकोटीं तु महर्लोको विधीयते ॥[4]

**जनलोकः**—महर्लोकाद् द्विकोटियोजनानि ( २,००,००,००० ) यावदुपरि जनलोकस्थितिर्विद्यते । तत्र ब्रह्मणः पुत्राः सनन्दन-सनत्कुमारादयो मनीषिणश्च संतिष्ठन्ते । तथा निगदितं ब्रह्मपुराणे—

द्वे कोट्यौ तु जनो लोको यत्र ते ब्रह्मणः सुताः ।
सनन्दनाद्याः कथिता विप्राश्चामलचेतसः ॥ इति ।[5]

**तपोलोकः**—जनलोकादुत्तरे भागेऽष्टकोटियोजनपर्यन्तम् ( ८,००,००,००० ) तपोलोकस्य संस्थितिः । तत्र चक्रवर्तिराजानस्त्यक्तदेहाः पुण्यात्मानस्तिष्ठन्ति । तथोपवर्णितम्—

---

१. ब्र० पु०, २३।९  २. ब्र० पु०, २३।१०  ३. ब्र० पु०, २३।११
४. ब्र० पु०, २३।१२  ५. ब्र० पु०, २३।१३

चतुर्गुणोत्तरं चोर्ध्वं जनलोकात् तपः स्मृतम् ।
वैराजा यत्र ते देवाः स्थिता देहविवर्जिताः ।। इति ।[1]

**सत्यलोकः**—तपोलोकादूर्ध्वम् अष्टचत्वारिंशत्कोटियोजनमितः ( ४८,००,००,००० ) सत्यलोको विरमते । तं च सिद्धा मुनिगणाश्च सेवन्ते जीवनमुक्ताश्च भवन्ति । तथैव ब्रह्मपुराणे वर्ण्यते—

षड्गुणेन तपोलोकात् सत्यलोको विराजते ।
अपुनर्मारकं यत्र सिद्धादिमुनिसेवितम् ।। इति ।[2]

सत्यलोकादधो दक्षिणे भागे एककोटियोजनानि यावद् वैकुण्ठपुरम्, तथोपरि वामे भागे एककोटियोजनान्येव यावच्छिवलोकोऽपि विराजते । तथा च पूर्वमेवोक्तम् ।

उपर्युक्तलोकानां वर्णनानन्तरमिदानीं त्रैलोक्यवर्णनं विस्पष्टं क्रियते । पृथिव्यारम्भाद् ध्रुवलोकपर्यन्तं ये लोका वर्णितास्तेष्वन्तर्हिता ये भूर्लोक-भुवर्लोक-स्वर्लोकाः सन्ति तेषामेव त्रैलोक्यमिति संज्ञा । ते च क्रमशो वर्ण्यन्ते ब्रह्मपुराणे—

(१) **भूर्लोकः**—पृथिव्या आकाशे सप्ततिसहस्रयोजनानि ( ७०,००० ) यावत् पृथिवीपरिमाणं पूर्वोक्तम् । तत्परिमाणपर्यन्तो भूर्लोकः प्रथमः । तदाह व्यासो भगवान् ब्रह्मपुराणे—

पादगम्यं तु यत् किञ्चिद् वस्त्वस्ति पृथिवीमयम् ।
स भूर्लोकः समाख्यातो विस्तारोऽस्य मयोदितः ।। इति ।[3]

(२) **भुवर्लोकः**—सप्ततिसहस्रयोजनेभ्य उपरि सूर्यलोकपर्यन्तं यदन्तरम् ( १,००,००० ) एकलक्षयोजनमितं तदेव भुवर्लोको द्वितीयः । तथा चोक्तं व्यासेन मुनिना—

भूमिसूर्यान्तरं यत्तु सिद्धादिमुनिसेवितम् ।
भुवर्लोकस्तु सोऽप्युक्तो द्वितीयो मुनिसत्तमाः ।। इति ।[4]

(३) **स्वर्लोकः**=सूर्यलोकादनन्तरं ध्रुवलोकपर्यन्तं यानि चतुर्दशलक्षयोजनानि ( १४,००,००० ) अन्तराणि तन्मितः स्वर्लोकस्तृतीयो विख्यातः । तथा ह्युक्तम्—

ध्रुवसूर्यान्तरं यत्तु नियुतानि चतुर्दश ।
स्वर्लोकः सोऽपि कथितो लोकसंस्थानचिन्तकैः ।। इति ।[5]

**अथ कृतकाकृतकलोकवर्णनम्**—उपर्युक्ताः सर्वे त्रयोलोकाः कृतकाः, अर्थादनित्याः सन्ति, यतस्ते प्रलयकाले विनष्टा भवन्ति । महर्लोकं वर्जयित्वा जनलोक-तपोलोक-सत्यलोकाश्चाकृतकाः, अर्थाद् नित्याः सन्तीत्युक्तम्—

---

१. ब्र० पु०, २३।१४ २. ब्र० पु०, २३।१५ । ३. ब्र० पु०, २३।१६ ।
४. ब्र० पु०, २३।१७ । ५. ब्र० पु०, २३।१८ ।

त्रैलोक्यमेतत् कृतकं विप्रैश्च परिपठ्यते ।
जनस्तपस्तथा सत्यमिति चाकृतकं त्रयम् ॥ इति ।[1]

वर्णितानां षण्णां लोकानां मध्ये यो महर्लोको विराजते स हि कृतकाकृतकः, अर्थात् प्रलयकाले तस्यानश्वरत्वान्नित्यत्वम्, तथा च तस्मिन् नित्ये सत्यपि तत्रस्थात्मनां विनष्टानां सुकृताधिक्यात् पुनरागमनेन कृतकत्वम्=अनित्यत्वम् । तथा चोक्तं व्यासेन मुनिना—

कृतकाकृतको मध्ये महर्लोक इति स्मृतः ।
शून्यो भवति कल्पान्ते योऽन्तं न च विनश्यति ॥ इति ।[2]

**अथ ब्रह्माण्डवर्णनम्**—इत्थं ह्य ुपर्युक्ताः सप्त लोकाः, सप्त च पातालानि मिलित्वा ब्रह्माण्डं कथ्यते । तथोक्तं ब्रह्मपुराणे—

एते सप्त महालोका मया वः कथिता द्विजाः ।
पातालानि च सप्तैव ब्रह्माण्डस्यैकविस्तरः ॥ इति ।[3]

## अथ सप्तमहालोकानामुच्छ्रायकल्लनसूची

अत्र सप्तलोकानाम् उच्छ्रायपरिमाणानि क्रमशो विस्पष्टीक्रियन्ते—

| | | | | | |
|---|---|---|---|---|---|
| सप्ततिसहस्रयोजनमितः | ( ७०,००० ) | उच्छ्रायः | पृथिव्याः, | | **भूर्लोकः** (१) |
| लक्षयोजनमितः | ( १,००,००० ) | ,, | सूर्यलोकस्य, | | **भुवर्लोकः** (२) |
| | | | चन्द्रलोकाद् ध्रुवलोकपर्यन्तं | | **स्वर्लोकः** (३) |
| ,, ,, | ( १,००,००० ) | ,, | चन्द्रलोकस्य | | |
| ,, ,, | ( १,००,००० ) | ,, | नक्षत्रमण्डलस्य | चन्द्रात् पूर्वे | |
| द्विलक्षयोजनमितः | ( २,००,००० ) | ,, | बुधग्रहस्य | नक्षत्रादुत्तरे | |
| ,, ,, | ( २,००,००० ) | ,, | शुक्रग्रहस्य | बुधादुत्तरे | |
| ,, ,, | ( २,००,००० ) | ,, | मङ्गलग्रहस्य | शुक्रादुत्तरे | |
| ,, ,, | ( २,००,००० ) | ,, | गुरुग्रहस्य | मङ्गलादुत्तरे | |
| ,, ,, | ( २,००,००० ) | ,, | शनिग्रहस्य | | |
| लक्षयोजनमितः | ( १,००,००० ) | ,, | सप्तर्षिमण्डलस्य | | |
| ,, ,, | ( १,००,००० ) | ,, | ध्रुवलोकस्य | | |

योगः—पञ्चदशलक्ष-सप्ततिसहस्रयोजनानि १५,७०,०००, उक्तत्रैलोक्यस्य परिमाणानि ।

१. ब्र० पु०, २३।१९ । २. ब्र० पु०, २३।२० । ३. ब्र० पु० २३।२१ ।

तत्र भूर्लोकस्य भुवर्लोकस्य चोच्छ्रायौ ( १,७०,००० ) निष्कास्य स्वर्लोकस्य चतुर्दशलक्षयोजनमितः १४,००,००० उच्छ्रायो भवतीति ।

| | | | |
|---|---|---|---|
| एककोटियोजनमितः | १,००,००,००० | उच्छ्रायः | महर्लोकस्य (४) |
| द्विकोटियोजनमितः | २,००,००,००० | ,, | जनलोकस्य (५) |
| अष्टकोटियोजनमितः | ८,००,००,००० | ,, | तपोलोकस्य (६) |
| अष्टचत्वारिंशत्कोटियोजनमितः | ४८,००,००,००० | ,, | सत्यलोकस्य (७) |

समष्टियोगः—एकोनपञ्चाशत्कोटि-पञ्चदशलक्ष-सप्ततिसहस्रयोजनमितः—५९,१५, ७०,००० उच्छ्राय उक्तसप्तानां महालोकानाम् ।

**यमपुरप्रमाणवर्णनम्**—अथेदानीम् उक्तसप्तमहालोकेष्वन्तर्गतस्य यमपुरस्य प्रमाणं विव्रियते—

भूमेः ( ८६,००० ) षडशीतिसहस्रयोजनानन्तरम् उपर्याकाशे यमपुरं विद्यते । तद् ध्मातं ताम्रमिव सदा ज्वलत् तिष्ठति । तत्र गमनाय भूमिपरिमाणतो यमपुरपर्यन्तं तीक्ष्णकण्टकाकीर्णः पन्थाः ।

**तथा चोक्तं गरुडपुराणे व्यासेन**

षडशीतिसहस्राणि योजनानां प्रमाणतः ।
यमलोकस्य चाध्वानं ह्यन्तरा मानुषस्य च ॥
ध्माततताम्रमिवातप्तो ज्वलन् दुर्गो महापथः ।
तत्र गच्छन्ति पापिष्ठा मानवा मूढचेतसः ॥
कण्टकास्तीक्ष्णकाश्चैव विविधा घोरदारुणाः ।
तत्तु वर्त्म क्षितिर्व्याप्तं हुताशश्च तथोल्वणः ॥ इति ।[१]

अयम्भावः—(७०,०००) सप्ततिसहस्रयोजनमितोच्छ्रायो भूर्लोकस्य । ततो भूर्लोकादनन्तरम् एकलक्षयोजनमित ( १,००,००० ) उच्छ्रायः सूर्यलोकस्य । सूर्यलोक एक भुवर्लोकः । तस्मिन् भुवर्लोके ( ८६,००० ) षडशीतिसहस्रयोजनानन्तरं यमपुरस्य स्थितिः । तत्र यमराजगृहस्य विस्तारः सहस्रयोजनमितः ( १,००० ) । उच्छ्रायश्च पञ्चविंशयोजनमितः ( २५ योजनानि ) । तच्च धर्मराजगृहं सूर्यतेजोभिः पूर्णं विद्युज्ज्वालसमाकीर्णं चात्यन्तसन्तप्तं संतिष्ठते । तथोपवर्णितं गरुडपुराणे—

योजनानां सहस्रं हि प्रमाणेन तु दृश्यते ।
सर्वं रत्नमयं दिव्यं विद्युज्ज्वालार्कवर्चसम् ॥
तद् गृहं धर्मराजस्य विस्तीर्णं काञ्चनप्रभम् ।
पञ्चविंशप्रमाणेन योजनानि समुच्छ्रितम् ॥
वृतं स्तम्भसहस्रैस्तु वैदूर्यमणिमण्डितम् ।
मुक्ताजालं गवाक्षं तु पताकाशतभूषितम् ॥ इति ।[२]

१. ग० पु०, २३।३-५ । २. ग० पु०, २३।१७-१९ ।

वाराहपुराणे चेत्थं यमगृहपरिमाणान्युक्तानि व्यासेन—भुवर्लोके यमलोकस्य विस्तारः सहस्रयोजनमितः (१,०००), दैर्घ्यं द्विसहस्रयोजनमितं (२,०००), तथा तस्य मण्डलं चतुस्सहस्रयोजनमितं (४,०००) विस्तृतम् । तत्र नानाविधानि तेजोरूपकाञ्चनमयानि भवनानि सन्ति । तथाहि—

श्रूयतां द्विजशार्दूलाः कथ्यमानं मया द्विजाः ।
योजनानां सहस्रं तु विस्ताराद् द्विगुणायतम् ॥
द्विगुणं परिवेषेण तद् वै प्रेतपतेः पुरम् ।
भवनैरावृतं दिव्यैर्जाम्बूनदमयैः शुभैः ॥ इति ।[1]

**यमपुरे यमराजगृहव्यवस्थावर्णनम्**—तत्र यमपुरे प्रथममेव यमराजगृहं वर्तते । तद्गृहे ब्रह्मणो द्वादश पुत्रास्तिष्ठन्ति । ते च सर्वे श्रवणनामभिरवबोधिता यमराजस्य द्वारपालाः कथिताः । त्रिलोकेषु च स्थितानां जीवानां ते स्वावासादेव सुकृतदुष्कृतकर्माणि श्रुत्वा दृष्ट्वा च यमराजाय तत्कर्णिक-चित्रगुप्ताय च निवेदयन्ति । एवंविधा तेषां द्वादश-श्रवणानां श्रवणदर्शनसम्बन्धिनी अपूर्वा शक्तिर्विद्यते । तेषां कार्याणि च पृथक् पृथक् सन्ति । उक्तं च उत्तरार्धगरुडपुराणे—

द्वादशैव प्रतीहारा धर्मराजपुरे स्थिताः ।
शुभाशुभं च यत् कर्म ते विचार्य पुनः पुनः ॥
श्रवणा ब्रह्मणः पुत्रा मनुष्याणां च चेष्टितम् ।
कथयन्ति तदा काले पूजितापूजिताः स्वयम् ॥
नरैस्तुष्टैश्च रुष्टैश्च यत् प्रोक्तं च कृतं च यत् ।
सर्वमावेदयन्ति स्म चित्रगुप्ते यमे तथा ॥
दूराच्छ्रवणविज्ञानं दूराद् दर्शनगोचरम् ।
एवं चेष्टास्तु ते सर्वे स्वर्भूःपातालचारिणः ॥
तेषां पत्नास्तथैवोग्राः श्रवणाः पृथगाह्वयाः ।
एवं तेषां शक्तिरस्ति मर्त्ये मर्त्योपकारिका ॥ इति ।[2]

**वैज्ञानिकदृष्ट्या यमलोकः शक्त्यगारम् ( पावर हाउस )**—वैज्ञानिकदृष्ट्या तु मायारूपशक्तेर्विद्युद्रूपत्वात् सर्वेषां जीवात्मनां पृथक् पृथग् विद्युत्सूत्रजालेषु विस्तृतेषु परमात्मनोऽशत्वात् स शक्तिरूपात्मा देहान्निर्गत्याकाशे यमलोकादि स्थानं स्वकर्मानुसारं ( स्वशक्त्यनुसारम् ) गच्छति । इतो भूर्लोकात् ( ८६,००० ) षडशीतिसहस्रयोजनानन्तरं भुवर्लोके ( सूर्यलोके ) यमपुरस्य स्थितिः । यमपुरस्य प्रारम्भ एव पूर्वोक्तेन गरुडपुराण-वाराहपुराणादिप्रमाणेन यमराजस्य स्थानं विद्यते, यत्र द्वादश (१२) श्रवणास्तिष्ठन्ति । ते श्रवणाश्च दूरश्रावकदर्शकयन्त्राणि ( टेलीविजनादियन्त्राणि )पृथक् पृथग् द्वादशसंख्याकानि सन्ति । यमराजगृहस्योच्छ्रायो द्विसहस्रयोजनमितः । तदुपरि चित्रगुप्तस्य यमकर्णिकस्य ( कर्मचारिणः ) गृहं विद्यते यस्योच्छ्रायो दशसहस्रयोजनमितः ( १०,००० ), यश्चाग्रे वक्ष्यते, यत्र यम-

---

१. वा० पु०, १९६।२-३ । २. उत्तरार्धं ग० पु०, ७।४५-४९ ।

पुरमध्ये चित्रगुप्तः सन्तिष्ठते। तं परितः चतुरशीतिलक्षसंख्याकाः ( ८४,००,००० ) नरकाः सन्ति। वैज्ञानिकदृष्टया ते नरकाश्चतुरशीतिलक्षपरिमिता योनिमार्गाः प्रकल्प्यन्ते ये वै विद्युत्स्तम्भा विद्युल्लिङ्गा वा सन्ति।

यमराजो धर्मराजः कथ्यते। धर्मः ( न्यायः ) चासौ राजा चेति विग्रहे स बलवत्या विद्युतो बृहन्न्यायस्तम्भोऽस्ति, यस्य पार्श्वे द्वादश दूरश्रवण-दूरदर्शन-यन्त्राणि स्थापितानि सन्ति। 'धर्मराजसंज्ञकन्यायस्तम्भस्य संस्पर्शाद् जीवात्मबलानुसारं तत्तद्द्वादशयन्त्रैः चित्रगुप्तस्थानाद् दृढीभूतेषु तच्चतुरशीतिलक्षयोनिरूपेषु विद्युत्स्तम्भेषु अपेक्षितस्तम्भं प्रति स आत्मा प्रक्षिप्यते। द्वादशयन्त्रेषु प्रत्येकं श्रावकयन्त्रं पृथक् पृथक् सप्तलक्षविद्युत्स्तम्भसंघेषु सम्बद्धम्। यतः चतुरशीतिलक्षयोनिमार्गेभ्यो जीवात्मनां जन्महेतवे तेषु सप्तलक्षविद्युत्स्तम्भानामेकैकशः सङ्घ इति कृत्वा द्वादश सङ्घा निर्मिताः सन्ति। तथा च पापादिबलानुसारं ( स्वशक्त्यनुसारम् ) तस्यात्मनस्तत्तद्योनौ तत्तत्संघसम्बन्धाद् जन्म सम्भवति। चित्राणि विचित्राणि=विविधयोनिरूपाणि, गुप्तानि=अन्तर्हितानि यत्रेति कृत्वा चित्रगुप्तो विद्युतः सबलो योनिमार्गस्तम्भः कल्प्यते, यं परितश्चतुरशीतिलक्षसंख्याका योनीनां विद्युत्स्तम्भाः स्थापिताः सन्ति। चित्रगुप्तरूपः स महाबलशाली गुप्तयोनिमार्गस्तम्भः स्पर्शमात्रेण बलानुसारम् अपेक्षितश्रावकयन्त्रैरपेक्षित-विद्युत्स्तम्भे तमात्मानं नियुनक्ति तत्कालं येनापेक्षितयोनौ तस्य जन्म भवति। इत्थं च स यमलोकः पूर्णतया शक्त्यगारम् ( पावरहाउस ) संस्थापितं विद्यते, यदतिसंतप्तं विद्युज्ज्वालेनेति पूर्वं वर्णितम्।

**चित्रगुप्तगृहवर्णनम्**–चित्रगुप्तगृहम् ( गुप्तयोनिमार्गस्तम्भरूपम् ) धर्मराजस्य ( न्यायस्तम्भस्य ) गृहात् स्थानाद् वाकाशे उपरि पञ्चविंशतियोजनमितं ( २५ योजनानि) यावद् विस्तृतं विद्यते। तस्योच्छ्रायो (१०योजनानि) दशयोजनपर्यन्तकः। अनेन विधिना स यमलोकः पूर्णतया भुवर्लोके षडशीतिसहस्र ( ८६,००० ) योजनानन्तरं द्वादश ( १२,००० ) सहस्रयोजनमित उच्छ्रितो वर्तते। तदनन्तरमुपरि चतुर्दशसहस्रयोजनमिता ( १४,००० ) भुवर्लोकस्यावशिष्टांशा अवशिष्यन्ते। एतादृशयमलोके प्रथमं धर्मराजस्य ( न्यायस्तम्भस्य ) स्थानं द्विसहस्रयोजनमितम् ( २,००० ) उच्छ्रितं विद्यते, यत्र मध्यस्थं यमराजं ( न्यायस्तम्भं ) परितो द्वादश श्रवणाः ( दूरश्रवण-दूरदर्शनयन्त्राणि ) संतिष्ठन्ते। यमराजस्थानस्य विस्तारः सहस्रयोजनमितः ( १,००० ) तथा दैर्घ्यं द्विसहस्रयोजनमितम् ( २,००० )। तदुपरि चित्रगुप्तस्य ( गुप्तयोनिमार्गस्तम्भस्य ) स्थानं पञ्चविंशतिसहस्र ( २५,००० ) योजनप्रमाणतो विस्तृतं विद्यते। तस्योच्छ्रायो दशसहस्र ( १०,००० ) योजनमित इति। तन्मध्ये चित्रगुप्तस्थानं विद्यते यस्य प्राच्यां दिशि ज्वरस्य, दक्षिणे शूलस्य करालविस्फोटकस्य च, पश्चिमे कालपाशस्य तथाजीर्णारुचेः, उत्तरे विसूचिकायाश्च स्थानानि, ईशानकोणे मस्तकपीडायाः, आग्नेयकोणे मूर्च्छायाः, नैर्ऋत्यकोणेऽतिसारस्य, तथा वायव्यकोणे दाहस्य स्थानानि विशेषतश्च तिष्ठन्ति। एवं तानि स्थानानि पारितो नानाविधनरकाणां

सर्वेषां स्थितिर्विद्यते। ते च नरका ज्वरादिस्थानान्यादाय समष्टौ चतुरशीति-लक्षसख्याका वर्णिताः सन्ति।

इत्थं च तत्र यमपुरे जीवात्मा धर्मराजसमीपं गच्छन् अपेक्षितश्रवणाऽऽलापत-स्तस्य यमस्याज्ञया च चित्रगुप्तसमीपमुपतिष्ठते, ततश्चित्रगुप्तादेशेन पापबलानु-सारम् अपेक्षितनरकं गत्वा स्वकर्मोपभुज्य बलानुसारियोनिमार्गेण जन्मोपलभते।

वैज्ञानिकमतम्—वैज्ञानिकदृष्ट्या स जीवात्मा विद्युच्छक्तिरूपो बहुभीतिपुरनाम-काद् आकुञ्चनविद्युत्स्थानात् ( ट्रान्स्फार्मरस्तम्भात् ) न्यायमहास्तम्भोपरि ( पौ-राणिकयमराजस्थाने ) विद्युत आकर्षणादुत्पतति। ततः परावृत्य गुप्तयोनिमार्ग-महास्तम्भोपरि प्रक्षिप्तो भवति। ततश्च स महास्तम्भोऽपेक्षितश्रवणयन्त्रे तं संलग्नं करोति। तच्छ्रवणयन्त्रं स्वाधीनस्थ-सप्तलक्षयोनिषु मध्ये केनचिद् ह्रस्व-योनिस्तम्भेन सह तमात्मानं संयुनक्ति येन तज्जन्म भवति तद्योनौ।

**चित्रगुप्तस्थानपरिमाणम्**—अथेदानीं चित्रगुप्तस्थानपरिमाणं वर्ण्यते गरुडपुराण-स्योत्तरखण्डे—

पुरमध्ये प्रवेशे तु चित्रगुप्तस्य वै गृहम्।
पञ्चविंशतिसंख्यानां योजनानां प्रमाणतः॥
दशोच्छ्रितं महादिव्यं लोहप्राकारवेष्टितम्।
प्रतोलीशतसञ्चारं पताकाशतशोभितम्॥
दीपिकाशतसंकीर्णं गीतध्वनिसमाकुलम्।
चित्रितं चित्रकुशलैश्चित्रगुप्तस्य वै गृहम्॥
मणिमुक्तामये दिव्ये आसने परमाद्भुते।
तत्रस्थो गणयत्यायुर्मानुषेष्वितरेषु च॥
न मुह्यति कथञ्चित् सः सुकृते दुष्कृतेऽपि च।
जन्मनोपार्जितं यावत् सदसद्वेत्ति तस्य तत्॥
दशाष्टदोषरहितं कृतं कर्म लिखत्यसौ।
चित्रगुप्तगृहात् प्राच्यां ज्वरस्यास्ति महागृहम्॥
दक्षिणे चापि शूलस्य लूताविस्फोटकस्य च।
पश्चिमे कालपाशस्य अजीर्णस्यारुचेस्तथा॥
मध्यपीठोत्तरे ज्ञेया तथा चान्या विसूचिका।
ऐशान्यां वै शिरोऽर्त्तिः स्यादाग्नेय्यां चैव मूर्च्छना॥
अतिसारस्तु नैर्ऋत्यां वायव्यां दाहसंज्ञकः।
एभिः परिवृतो नित्यं चित्रगुप्तः स तिष्ठति॥
यत् कर्म क्रियते यैश्च तत् सर्वं तु लिखत्यसौ।
धर्मराजगृहद्वारि दूतास्ताक्ष्यं तथा दिशि।
तिष्ठन्ति पापकर्माणः पीडयन्तो नराधमान्॥ इति॥[1]

---

१. ग० पु० उत्तरखण्डे २३।२४-३३।

**अथ प्रेतरूपस्यात्मनो यमपुरगमनवर्णनम्**—निधनानन्तरं हस्तपरिमितो वायवीयः ( वायुवच्छरीरोऽदृश्यः ) स आत्मा द्वादशदिनानीह मरणस्थाने व्यतीत्य पिण्डादिदानैर्बलं प्राप्य त्रयोदशदिनादारभते स्वगमनं यमलोकपुरं प्रति। तत्र मार्गे मध्ये मध्ये षोडश पुराणि प्राप्यन्ते, यत्र सर्वत्रार्धमुहूर्तं विश्रमते पुत्रादिभिर्दत्तं पिण्डादिकमुपभुज्य च तृप्यति। तानि षोडश पुराणीमानि क्रमशः—

(१) सौम्यपुरम् ( याम्यपुरम् )।
(२) सौरिपुरम्।
(३) वरेन्द्रनगरम् ( सुरेन्द्रनगरम्, नगेन्द्रभवनं वा )।
(४) गन्धर्वनगरम्।
(५) नागपुरम् ( शैलागमः )।
(६) क्रूरपुरम्।
(७) क्रौञ्चपुरम् ( क्रौञ्चनगरम् )।
(८) चित्रनगरम् ( अत्र वैतरणी नदी )।
(९) बह्वापदम् ( बद्धपदनगरम् )।
(१०) दुःखदपुरम्।
(११) नानाक्रन्दपुरम्।
(१२) सुतप्तनगरम्।
(१३) रौद्रपुरम्।
(१४) पयोवर्षणपुरम्।
(१५) शीतपुरम् ( शीताढ्यनगरम् )।
(१६) बहुभीतिपुरम्।

एतदनन्तरं महाविशालं भयङ्करं यमपुरं प्राप्नोति। बहुभीतिपुर एव स आत्मा हस्तमितं देहं परित्यज्य यमयातनासहनयोग्योऽङ्गुष्ठमात्रो भूत्वापसर्पति पुरतो बहुकम्पमानो यमपुरं प्रतीति वर्षस्यान्ते। तदुक्तं गरुडपुराणस्य प्रेतकल्पे प्रथमाध्याये—

अतीत्य क्रमशो मार्गे पुराणीमानि षोडश।
प्रयाति धर्मराजस्य भवनं पातकी जनः॥
सौम्यं सौरिपुरं नगेन्द्रभवनं गन्धर्व-शैलागमौ
क्रौञ्चं क्रूरपुरं विचित्रभवनं बह्वापदं दुःखदम्।
ननाक्रन्दपुरं सुतप्तभवनं रौद्रं पयोवर्षणं
शीताढ्यं बहुभीतिधर्मभवनं याम्यं पुरं चाग्रतः॥[1]

षोडशस्थानीय-यातनासह्यं वायवीयशरीरं हस्तपरिमितमेव योग्यम्। किन्तु तच्छरीरं यमलोके यातनासहनाय न क्षमम्। अतस्तत्र यमलोकवायुमण्डलीयं कठोरमङ्गुष्ठमात्रं शरीरं भवति तत्स्थानप्रकृतितः। इत्थं प्रकृतित

१. ग० पु०, प्रे० क० १।५८-५९।

एवान्तिमसत्यलोकपर्यन्तं यावन्तो लोका मध्ये सन्ति तत्र सर्वत्र क्रमश उत्तरोत्तरस्मिन् लोके पूर्वपूर्वशरीरपरिमाणात् कठोरतरं सूक्ष्मतरं च शरीरं भवत्येव। अनेनैवाशयेनाह मनुस्मृतौ मनुः—

पञ्चभ्य एव मात्राभ्यः प्रेत्य दुस्कृतिनां नृणाम् ।
शरीरं यातनार्थीयमन्यदुत्पद्यते ध्रुवम् ।। इति ।[1]

वैज्ञानिकदृष्ट्या-इमानि पुराणि विद्युदाकुञ्चनस्थानानि यानि 'ट्रान्सफार्मर' इतीदानीं लोके प्रसिद्धानि सन्ति, यत्र विद्युतः समाकुञ्चनेन सबलीभूयाग्रगमने सक्षमो भवति स आत्मा ।

अतिनिर्बलः स आत्मा निधनदिनाद् द्वादशदिनपर्यन्तं गृह एव तिष्ठन् श्राद्धीयसत्त्वेन सोमेन सक्षमो भूत्वा त्रयोदशे दिने स्वस्थानाद् यमलोकादीन् प्रति गच्छति । अनेनैवाशयेनाह व्याससुनिर्गरुडपुराणे—

त्रयोदशेऽह्नि स प्रेतो नीयते यमकिङ्करैः ।
तस्मिन् मार्गे व्रजति यो गृहीत हव मर्कटः ।।[2]

**जीवात्मनो यमपुरं प्रति गमनसमयस्तत्तत्स्थानमानं च**—स आत्मा प्रतिदिनं दिवारात्रेण ( २४ घण्टासमयेन ) सप्तचत्वारिंशदधिकशतद्वययोजनानि ( २४७ योजनानि ) गच्छति, षोडशस्थानेषु क्रमशः प्रत्येकस्थानेऽर्धमुहूर्तं विश्रमते च। तथा चोक्तम्—

अहन्यहनि वै प्रेतो योजनानां शतद्वयम् ।
चत्वारिंशत् तथा सप्त दिवारात्रेण गच्छति ।।[3]

उक्तमानेन परिगणय्येदमायातं यत्—

| | योजनानि | फर्लाङ्गानि | गजानि | फीटे |
|---|---|---|---|---|
| अर्धमुहूर्तः=२४क्षणाः । | ४ | ७ | १०२ | २ |

तथा चोक्तामरकोशे परिभाषा—

अष्टादश निमेषास्तु काष्ठा त्रिंशत्तु ताः कला ।
तास्तु त्रिंशत्क्षणस्ते तु मुहूर्तो द्वादशास्त्रियाम् ।।
ते तु त्रिंशदहोरात्रः पक्षस्ते दश पञ्च च ।
पक्षौ पूर्वापरौ शुक्ल-कृष्णौ मासस्तु तावुभौ ।।[4]

इत्थं च २ घट्यौ=१ मुहूर्तः
२४ घण्टाः=६० घट्यः
१ घण्टा=२½ घट्यः ( ६० मिनट )
अर्धमुहूर्तः=१ घटी ( १ दण्डः )=२४ क्षणाः ( २४ मिनट )
एक-फर्लाङ्गेन समानि=२२० गजानि भवन्ति ।

---

१. मनु० १२।१६ २. ग० पु०, प्रे० क० २।४४
३. ग० पु०, प्रे० क० १।५७ ४. अम० ४।११-१२

एवं च दशदिनानि यावद् दशगात्रपिण्डैः दशाङ्गविशिष्टशरीरो भूत्वा स वायवीयशरीर आत्मा द्वादशदिनपर्यन्तं सबलीभूयाकाशं प्रति गच्छति । तथा चोक्तं व्यासेन—

लब्धेनैव च देहेन भुङ्क्ते सुकृतदुष्कृते ।
वायुरूपो भ्रमत्येव वायुरूर्ध्वं स गच्छति ॥
दशाहकर्मक्रियया कुटी निष्पाद्यते ध्रुवम् ।
नवकैः षोडशश्राद्धैः प्रयाति हि कुटीं नरः ॥[1]

कुटी=कुटति ( कुटिलीभवति ) इति । कुट कौटिल्ये धातोः कर्तरि-इगुपधज्ञाप्रीकिरः कः ( ३।१।१३५ ) इति कः । षिद्गौरादिभ्यश्च ( ४।१।४१ ) इति गौरादित्वात् ङीष् । कुटी=वासस्थानम्, निश्चितस्थानं वा ।

**अथ प्रेतस्वरूपम्**

यस्य दशगात्रपिण्डदानं न भवति स प्रेतरूपो भूत्वा भ्रमते । नवकैश्च षोडशश्राद्धैस्तस्य प्रेतत्वमुक्तिर्भवति ।

तथा प्रोक्तम्—

पिण्डदानं न यस्याभूदाकाशे भ्रमते तु सः ।
दिनत्रयं वसंस्तोये अग्नावपि दिनत्रयम् ॥
आकाशे वसते त्रीणि दिनमेकं तु वासके ॥[2]

तथा च नवकश्राद्धम्—

प्रथमेऽह्नि तृतीये च पञ्चमे सप्तमेऽपि च ।
नवमैकादशे चैव श्राद्धं नवकमुच्यते ।[3]

नवकम्=नूयते ( स्तूयते ) इति । णु स्तुतौ धातोः कर्मणि ऋदोरप् (३।३।५७) इत्यप् । सार्वधातुकार्धेति गुणः । अवादेशः । नवम्=नवीनम्, स्तुत्यम् । कुत्सितं नवम् इति विग्रहे कुत्सितार्थे संज्ञायां कन् ( ५।३।७५ ) इति कन् । नवकम् ( श्राद्धम् )=कुत्सितं प्रेतश्राद्धं यद् विषमदिने विशिष्यते ।

वैज्ञानिकरीत्या, वायुशरीरः—इत्यस्य वायुवद् अदृश्यमानविद्युच्छक्तिशरीर इत्यर्थः कर्तव्यः । यतो हि वायुर्न कस्यचिद् पदार्थस्य भक्षको भवति, स तु जलमिव स्वयं भक्ष्य एव । अत एवाप्तैः 'अब्भक्षः, वायुभक्षः' इत्यादिप्रयोगो विहितः । एवं वायुः पिण्डादिसत्त्वभक्षणेऽसमर्थः स्वयमेव सिद्ध्यति । ब्रह्मांशरूपा विद्युच्छक्तिस्तु सोमरसभक्षणे क्षमैव । अतो विद्युदात्मैव द्वादशदिनपर्यन्तमत्र स्थित्वा पिण्डादिसत्त्वं गृहीत्वा सक्षमः सन् स्वकर्मानुसारमपेक्षितलोकं गच्छति । नचाग्नेर्ज्वालादि दृश्यमानतेज इति वाच्यम् । तस्य आर्द्रत्वेन्धनादिविकारत्वात् । तैजसशक्तिस्तु ज्वालादावन्तर्हितैव भवति । ऊष्मा प्रकाशश्च तस्य गुणो यः सच्चिदानन्दस्वरूप एव ।

१. ग० पु०, प्रे० ख० ३४।२७-२८  २. ग० पु०, प्रे० ख० ३४।३५
३. ग० पु०, प्रे० ख० ३४।३६

एवं स विद्युद्रूपात्मा पिण्डजलादेः सत्वं सोमरसं भक्षयित्वा द्वादशदिनैः सशक्तो भवति। वस्तुतस्तु 'वायुशरीरः' इत्यस्य वायुना सह शरीरं यस्यासौ—इत्येवार्थो युक्तः। यतः स विद्युद्रूप आत्मा प्राणवायुना सहैव देहान्निर्गच्छतीति पूर्वमेवोक्तम्।

(१) **पृथिव्याः सौम्यपुरगमनवर्णनम्**—तथा च त्रयोदशदिने स पापात्मा स्वस्थानाद् यमपुरं प्रति प्रचलति। अष्टादशदिनेषु निधनदिनाद् मासे पूर्णे तु स मार्गे सौम्यपुरं (याम्यपुरम्) प्राप्नोति। तत्रार्धमुहूर्तं विश्रम्य पुत्रादिभिर्दत्तं मासिकश्राद्धपिण्डजलादिसत्त्वं च संगृह्य स्वस्थो भवति। तथा चोक्तं गरुडपुराणे—

दशसप्तदिनान्येको वायुवेगेन गच्छति।
अष्टादशे दिने ताक्ष्यं प्रेतः सौम्यपुरं व्रजेत्॥[1]

अथवा

सप्तदशदिनान्येको वायुमार्गेण गच्छति।
अष्टादशे त्वहोरात्रे पूर्वं याम्यपुरं व्रजेत्॥[2]

अत्र दत्तं सुतैः पौत्रैः स्नेहाद् वा कृपयाऽथवा।
मासिकं पिण्डमश्नाति ततः सौरिपुरं व्रजेत्॥[3]

उदकं चान्नसंयुक्तं भुङ्क्ते तस्मिन् पुरे गतः।
त्रिभिः पक्षैस्तथा पिण्डैस्तत् पुरं स व्यतिक्रमेत्॥[4]

(२) **सौम्यपुरतः सौरिपुरगमनवर्णनम्**— सौम्यपुरतः पञ्चदशदिनेषु त्रिपक्षैर्वा सौरिपुरं प्राप्नोति। तत्र त्रैपाक्षिकं पिण्डादिसत्त्वं संगृह्यार्धमुहुर्तं विश्रम्य च सुरेन्द्रनगरं प्रति गच्छति। तथोक्तं व्यासेन—

सुरेन्द्रनगरे रम्ये प्रेतो याति दिवानिशम्।
ततो वनानि रौद्राणि दृष्ट्वा क्रन्दति तत्र सः॥
भीषणैः क्लिश्यमानश्च क्रन्दत्येव पुनः पुनः।
मासद्वयावसाने तु तत् पुरं स व्यतिक्रमेत्॥[5]

(३) **सौरिपुरतः सुरेन्द्रनगरगमनवर्णनम्**—सौरिपुरतः पुनः पञ्चदशदिनेषु मासद्वये पूर्णे सुरेन्द्रनगरं प्राप्नोति। तत्र द्वितीयमासिकपिण्डादिसत्त्वेन स्वस्थीभूय विश्रम्य च (विश्रामकाले वैज्ञानिकदृष्ट्या सर्वत्रावरोधस्थानेषु विद्युदाकुञ्चनं करोत्यात्मा) गन्धर्वनगरं प्रति गच्छति।

(४) **सुरेन्द्रनगराद् गन्धर्वनगरगमनवर्णनम्**—तथा चोक्तं गरुडपुराणे—

तृतीये मासि सम्प्राप्ते गन्धर्वनगरे शुभे।
तृतीयमासिकं पिण्डं तत्र भुङ्क्ते स गच्छति॥[6]

---

१. ग० पु०, प्रे० क० २।४३ २. ग० पु०, उ० ख० ६।२
३. ग० पु०, उ० ख० ६।१० ४. ग० पु०, उ० ख० ६।१२
५. ग० पु०, उ० ख० ६। १३-१४ ६. ग० प्र०, उ० ख० ६।१५

तत्र तृतीयमासिकपिण्डादिसत्त्वेन स्वस्थीमूय शैलागमनगरं प्रति गच्छति।

**(५) गन्धर्वनगरात् शैलागमनगरगमनवर्णनम्**

**तथाहि—**

शैलागमे चतुर्थे च मासि याति खगेश्वर।
पतन्ति तत्र पाषाणाः प्रेतस्योपरि पृष्ठतः ॥
चतुर्थमासिकं श्राद्धं भुक्त्वा तत्र सुखी भवेत्।
स गच्छति ततः प्रेतः क्रूरं मासे तु पञ्चमे ॥[१]

गन्धर्वनगरात् पूर्णे चतुर्थे मासे शैलागमनगरं प्राप्य तत्र चतुर्थमासिकं पिण्डादिसत्त्वं संगृह्यार्धमुहूर्तं यावत् सुखी भवति।

**(६) शैलागमनगरात् क्रूरपुरम् (७) क्रूरपुराच्च क्रौञ्चपुरगमनवर्णनम्**—ततः पञ्चमे मासे क्रूरपुरं प्राप्नोति। तत्रापि पञ्चममासिकपिण्डादिसत्त्वं गृहीत्वा ततः क्रौञ्चपुरं प्रति गच्छति। क्रूरपुरतः पञ्चदशदिनेषु क्रौञ्चपुरं प्राप्नोति। तत्र च ऊनषाण्मासिकपिण्डादिसत्त्वं संगृह्य स्वस्थो भवति। तथा चोक्तं गरुडपुराणे—

पञ्चममासिकं पिण्डं भुङ्क्ते तत्र पुरे स्थितः।
ऊनषाण्मासिकं क्रौञ्चैः पञ्चभिः सार्द्धमासिकैः ॥
तत्र दत्तेन पिण्डेन श्राद्धेनाऽऽप्यायितस्ततः।
मुहूर्तार्द्धं तु विश्रम्य कम्पमानः सुदुःखितः ॥[२]

**(८) क्रौञ्चपुरतश्चित्रनगरगमनवर्णनम्**—क्रौञ्चपुरतः पञ्चदशदिनेषु षष्ठे मासे पूर्णे जाते चित्रनगरं प्राप्यते। तत्र षाण्मासिकेन पिण्डादिसत्त्वेन स्वस्थो भवति। तथोपवर्णितम्—

तत् पुरं तु परित्यज्य तर्जितो यमकिङ्करैः।
प्रयाति चित्रनगरं विचित्रो नाम पार्थिवः ॥
यमस्यानुजः सौरिर्यंत्र राज्यं प्रशास्ति हि।
तत्र षण्मासपिण्डेन तृप्तः सन् कृष्यते नरः ॥[३]

**(९) चित्रनगराद् बद्धपदनगरगमनवर्णनम्**—चित्रनगरात् पूर्णे सप्तमे मासे बद्धपदनगरं प्राप्नोति। तत्र सप्तममासिकं पिण्डादिसत्त्वं गृहित्वा सुखी भवति। तथा प्रदर्शितं व्यासेन—

सप्तमे मासि सम्प्राप्ते पुरं बद्ध्वा पदं व्रजेत्।
तत्र भुक्त्वा प्रदत्तं यत् सप्तमासिकसम्भवम् ॥[४]

**(१०,११) बद्धपदनगराद् दुःखदपुरम्, दुःखदपुराच्च नानाक्रन्दपुरगमनवर्णनम्**—बद्धपदनगरात् पूर्णे त्वष्टमे मासे दुःखदपुरं प्राप्यते। तत्राष्टममासिकं पिण्डादिसत्त्वं

---

१. ग० पु०, उ० ख० ६।१६-१७
२. ग० पु०, उ० ख० ६।१८-१९
३. ग० पु०, उ० ख० ६।२०-२१
४. ग० पु०, उ० ख० ६।३२

संगृह्य स्वस्थो भवति। ततो दुःखदपुरतो नवमे मासे पूर्णे सति नानाक्रन्दपुरं प्राप्यते। तत्र च नवममासिकेन पिण्डादिसत्त्वेन स्वस्थो भवति। तथा चोपवर्णितम्—

तत् पुरं स व्यतिक्रम्य दुःखदं पुरमाश्रयेत्।
महद् दुःखमनुप्राप्य स्वमार्गे याति वै पुनः॥

मास्यष्टमे प्रदत्तं यत् तत्र भुक्त्वा स गच्छति।
नवमं मासिकं भुङ्क्ते नानाक्रन्दपुरे स्थितः॥[1]

(१२) **नानाक्रन्दपुरात् सुतप्तनगरगमनवर्णनम्**—नानाक्रन्दपुरात् दशमे मासे पूर्णे सुतप्तनगरं प्राप्नोति सः। तत्र दशममासिकं पिण्डादिसत्त्वं संगृह्य सुखमनुभवन् रौद्रपुरं प्रति गच्छति। तथा चोक्तं गरुडपुराणे—

विहाय तत् पुरं प्रेतो याति तप्तपुरं प्रति।
सुतप्तनगरं प्राप्य दशमे मासि सोऽश्नुते॥[2]

(१३) **सुतप्तनगराद् रौद्रपुरगमनवर्णनम्**—सुतप्तनगराद् एकादशे मासे स रौद्रपुरं प्राप्नोति। तत्रैकादशमासिकं पिण्डादिसोमसत्त्वं गृहीत्वा स्वस्थो भवति। तथोपवर्णितम्—

भोजनैः पिण्डदानैस्तु दत्तैस्तत्र सुखी भवेत्।
मासि चैकादशे पूर्णे रौद्रं स्थानं स गच्छति॥[3]

(१४, १५) **रौद्रपुरत पयोवर्षणनगरम्; पयोवर्षणनगराच्च शीतपुरगमनवर्णनम्**—रौद्रपुरतः पञ्चदशदिनेषु स पयोवर्षणनगरं प्राप्नोति। तत्र न्यूनाब्दिकं श्राद्धपिण्डादिसत्त्वं प्राप्य सुखी भवति। ततः पयोवर्षणनगरात् पञ्चदशदिनेषु पूर्णे वर्षे शीतपुरं प्राप्नोति यत्र शीताधिक्येन बहुकम्पमानः क्षुधितो व्यथितो भवति। तत्र च वार्षिकं पिण्डादिसत्त्वं गृह्णाति। तथोपवर्णितम्—

दशैकमासिकं भुक्त्वा पयोवर्षणमृच्छति।
मेघास्तत्र प्रवर्षन्ति प्रेतानां दुःखदायकाः॥

न्यूनाब्दिकं च यच्छ्राद्धं तत्र भुङ्क्ते सुदुःखितः।
सम्पूर्णे च ततो वर्षे प्रेतः शीतपुरं व्रजेत्॥

शीताढ्यनगरं तत्र महाशीतं प्रवर्तते।
शीतार्त्तः क्षुधितः सोऽपि वीक्षते हि दिशो दश॥[4]

(१६) **शीतपुरतो बहुभीतिपुर-यमपुरमुख्यद्वारगमनवर्णनम्**—शीतपुराद् वर्षस्यान्ते यमालयसन्निधाने बहुभीतिपुरं यमपुरमुख्यद्वारं प्राप्नोति सः। तत्र च हस्तमात्रं शरीरं परित्यज्य यमपुरयातनाभोग्ययोग्यम् अङ्गुष्ठमात्रं देहं गृह्णाति।

---

१. ग० पु०, उ० ख० ६।३३-३४  २. ग० पु, उ० ख० ६।३६
३. ग० पु०, उ० ख० ६।३७  ४. ग० पु०, उ० ख० ६।३८-४०

तथोपवर्णितं गरुडपुराणे—

किङ्करास्ते वदन्त्यत्र किं ते पुण्यं हि तादृशम् । भुक्त्वा च वार्षिकं पिण्डं धैर्यमालम्बते पुनः ॥
ततः संवत्सरस्यान्ते प्रत्यासन्ने यमालये । बहुभीतिपुरे गत्वा हस्तमात्रं समुत्सृजेत् ॥
अङ्गुष्ठमात्रो वायुश्च कर्मभोगाय खेचरः । यातनादेहमासाद्य सह याम्यैः प्रयाति च ॥
और्ध्वदेहिकदानानि यैर्न दत्तानि काश्यप । एवं कष्टेन ते यान्ति गृहीता दृढबन्धनैः ॥
धर्मराजपुरे सन्ति चतुर्द्वाराणि खेचर । तत्राद्यं दक्षिणद्वारमार्गस्ते परिकीर्तितः ॥[१]

भूमेर्यमलोकपर्यन्तं मार्गे आत्मनो विश्रामाय ( बलवृद्धयर्थं विद्युदाकुञ्चनाय ) षोडशावरोधस्थानेषु पुरेषु वर्णितेष्विदानीं ४५ पृष्ठे वर्णितमानानुसारं योजन-क्रोश-मील-फर्लाङ्ग-गज-फीटाद्याधुनिकमानाधारेण तत्तत्स्थानानां परिमाणानुक्रमणी दीयते निम्नप्रकारेण ।

अथ सौम्यपुरादीनां परिमाणानुक्रमणी

| क्र०सं० | स्थानात् | स्थानान्तम् | समये | योजनानि | क्रोशानि | मीलानि | फर्लाङ्गानि | गजानि | फीटानि | भोग्यपिण्डम् |
|---|---|---|---|---|---|---|---|---|---|---|
| १ | भूमेः | सौम्यपुरम् | १८ दिनेषु ( पूर्णमासे ) | ४४४६ | ० | ० | ७ | १०२ | २ | प्रथममासिकम् |
| २ | सौम्यपुरात् | सौरिपुरम् | १५ दिनेषु ( त्रिपक्षेषु ) | ३७०० | ३ | १ | ० | ११७ | १ | त्रैपाक्षिकम् |
| ३ | सौरिपुरात् | सुरेन्द्रनगरम् | १५ दिनेषु ( द्वितीयमासे ) | ३७०० | ३ | १ | ० | ११७ | १ | द्वितीयमासिकम् |
| ४ | सुरेन्द्रनगरात् | गन्धर्वनगरम् | १ मासे ( तृतीयमासे ) | ७३९७ | २ | १ | १ | १२८ | ० | तृतीयमासिकम् |

१. ग० पु०, प्रे० क० २।८१-८५

| क्र०सं० | स्थानात् | स्थानान्तम् | समये | योजनानि | क्रोशानि | मीलानि | फर्लाङ्गानि | गजानि | फीटानि | भोग्यपिण्डम् |
|---|---|---|---|---|---|---|---|---|---|---|
| ५ | गन्धर्वनगरात् | शैलागमनगरम् | १ मासे ( चतुर्थमासे ) | ७३९७ | २ | १ | १ | १२८ | ० | चतुर्थमासिकम् |
| ६ | शैलागमनगरात् | क्रूरपुरम् | १ मासे ( पञ्चममासे ) | ७३९७ | २ | १ | १ | १२८ | ० | पञ्चममासिकम् |
| ७ | क्रूरपुरात् | क्रौञ्चपुरम् | १५ दिनेषु ( सार्धपञ्चममासे ) | ३७०० | ३ | १ | ० | ११७ | १ | ऊनषाण्मासिकम् |
| ८ | क्रौञ्चपुरात् | चित्रनगरम् | १५ दिनेषु ( षष्ठमासे ) | ३७०० | ३ | १ | ० | ११७ | १ | षाण्मासिकम् |
| ९ | चित्रनगरात् | बद्धपदनगरम् | १ मासे ( सप्तममासे ) | ७३९७ | २ | १ | १ | १२८ | ० | सप्तममासिकम् |
| १० | बद्धपदनगरात् | दुःखदपुरम् | १ मासे ( अष्टममासे ) | ७३९७ | २ | १ | १ | १२८ | ० | अष्टममासिकम् |
| ११ | दुःखदपुरात् | नानाक्रन्दपुरम् | १ मासे ( नवममासे ) | ७३९७ | २ | १ | १ | १२८ | ० | नवममासिकम् |
| १२ | नानाक्रन्दपुरात् | सुतप्तनगरम् | १ मासे ( दशममासे ) | ७३९७ | २ | १ | १ | १२८ | ० | दशममासिकम् |
| १३ | सुतप्तनगरात् | रौद्रपुरम् | १ मासे ( एकादशमासे ) | ७३९७ | २ | १ | १ | १२८ | ० | एकादशमासिकम् |
| १४ | रौद्रपुरात् | पयोवर्षणनगरम् | १५ दिनेषु ( सार्धैकादशमासे ) | ३७०० | ३ | १ | ० | ११७ | १ | ऊनाब्दिकम् |

| क्र०सं० | स्थानात् | स्थानान्तम् | समये | योजनानि | क्रोशानि | मिलानि | फर्लाङ्गानि | गजानि | फीटानि | भोग्यपिण्डम् |
|---|---|---|---|---|---|---|---|---|---|---|
| १५ | पयोवर्षणनगरात् | शीतपुरम् | १५ दिनेषु ( द्वादशमासे ) | ३७०० | ३ | १ | ० | ११७ | १ | आब्दिकम् |
| १६ | शीतपुरात् | बहुभीतिपुरम् ( यमपुरमुख्यद्वारम् ) | १६घण्टा १३ मि० ३७ से०मितसमये | १६७ | १ | १ | ० | १४९ | १ | यमराजासनम् |
| | समष्टियोगः= | | | ८६००० | ० | ० | ० | ० | ० | |

आधुनिकदूरमान-परिभाषा—

३ फीटानि=१ गजम्
२२० गजानि=१ फर्लाङ्गम्
८फर्लाङ्गानि=१ मीलम्
२ मीले=१ क्रोशम्
४ क्रोशानि=१ योजनम्

पूर्वमिदं प्रमितमेव यत्–अर्धमुहूर्तसमाना अथवा १ घटी (१ दण्ड) समानाः २४ क्षणाः ( मिनटकालिकाः ) भवन्ति। तस्मिन् काले यात्रावेगानुसारं तस्य जीवात्मनः ४ योजन—७ फर्लाङ्ग—१०२ गज—२ फीटात्मकं दूरमानं न्यूनं भवति प्रतिविश्रामस्थलनिमित्तकम्। अनेनैव क्रमेणोल्लिखितान्युपरि मानानि प्रमितानि सौम्यपुरादि-षोडशस्थानानामिति। बहुभीतिपुरतो भोग्यमुपभुज्य पुनर्यथास्थानमुपतिष्ठते जन्म वा लभते स जीवः।

इदानीमपेक्षितत्वाल्लोकानां सपरिमाणं मानचित्रं प्रस्तूयते यथासाध्यम्, यच्चित्रकलाविद्भिरन्यैर्विद्वद्भिश्च वैज्ञानिकैर्वा यथोपकल्प्यं रेखाप्रमाणमात्रम्। तथाहि—

5179

## ब्रह्माण्ड-स्वरूपम्

भूमेरुपरिष्टात् सप्त स्वर्लोकाः, अधस्ताच्च सप्त पातालानि

तन्मानचित्रम्

| | |
|---|---|
| **७ सत्यलोकः** | **४८ कोटि यो०** |
| शिवलोकः | १ कोटियो० |
| | बैकुण्ठपुरम् १ कोटि यो० |
| **६ तपोलोकः** | **८ कोटि यो०** |
| **५ जनलोकः** | **२ कोटि यो०** |
| **४ महर्लोकः** | **१ कोटि यो०** |
| **३ स्वर्लोकः** | **१४ लक्ष यो०** |
| ध्रुव लोकः | १ लक्ष यो० |
| सप्तर्षिमण्डलम् | १ लक्ष यो० |
| शनिग्रहः | २ लक्ष यो० |
| गुरुग्रहः | २ लक्षयो० |
| मङ्गलग्रहः | २ लक्षयो० |
| शुक्रग्रहः | २ लक्षयो० |
| बुधग्रहः | २ लक्ष यो० |
| नक्षत्र मण्डलम् | १ लक्ष यो० |
| चन्द्र | लोकः १ लक्ष यो० |
| **२ भुवर्लोकः** | सूर्यलोको वा १ लक्षयो० |
| यमलोकः १२ स० यो० | चित्रगुप्तस्थानम् १० स० यो० |
| | यमस्थानम् २ स० यो० |
| **१ भूर्लोकः** | ७० सहस्र-योजनानि |

**पृ ● थ्वी**

| | |
|---|---|
| | अतलम् १० स० योजनानि (१) |
| (२) वितलम् १० स० यो० | नितलम् १० स० यो० (३) |
| (४) सुतलम् १० स० योजनानि | तलातलम् १० स० यो० (५) |
| (६) रसातलम् १० स० यो० | पातालम् २० स० यो० (७) |

**सिद्धसिद्धान्तसंग्रहे चतुर्दशलोकानां संस्थितिः शरीर एव प्रदर्शिता**—सर्वेषां सप्तपातालानां सप्तस्वर्लोकानां च संस्थितिः पिण्डरूपे शरीर एव संसाधिता विद्यते। पिण्डस्य पादतलादारम्य मेरुदण्डान्तं सकलं ब्रह्माण्डम्। पिण्डमध्ये चित्स्वरूपः परमात्मा साक्षात्तिष्ठन् ब्रह्मविष्णुरुद्रेन्द्रादिरूपेण तत्तलोकरूपाङ्गाधिपत्येनानेकव्यापारमाचरति। स एवात्मा परमो ध्येयो ज्ञेयश्च, नान्यत्रान्वेष्टव्यः। न क्वचिदन्यत्र स्वर्गो नरको वा तिष्ठति। यतो ह्यात्मसुखमेव स्वर्गः, दुःखं च नरकः। इदमेव सर्वं गोरक्षसिद्धसिद्धान्तपद्धतौ तृतीयोपदेशे वर्णितम्।

तथा हि—

"पिण्डमध्ये चराचरं यो जनाति स योगी पिण्डसंवित्तिर्भवति।

कूर्मः पादतले वसति, पातालं पादाङ्गुष्ठे। तलातलमङ्गुष्ठाग्रे। महातलं पादपृष्ठे। रसातलं गुल्फे। सुतलं जङ्घायाम्। वितलं जान्वोः। अतलमूर्वोः। एवं सप्त पातालम्।

रूद्रो देवता आधिपत्ये तिष्ठति। पिण्डमध्ये क्रोधरूपी भावः, स एव कालाग्नि-रुद्रः।

भूर्लोको गुह्यस्थाने, भुवर्लोको लिङ्गस्थाने, स्वर्लोको नाभिस्थाने। एवं लोकत्रय इन्द्रो देवता। पिण्डमध्ये सर्वेन्द्रियनियामकः स एवेन्द्रः।

दण्डाङ्कुरे महर्लोकः। दण्डकुहरे जनो लोकः। दण्डनाले तपोलोकः। मूलकमले सत्यलोकः। एवं लोकचतुष्टये ब्रह्माधिदेवता पिण्डमध्ये ऽनेकमानाभिमानस्वरूपी तिष्ठति।

विष्णुलोकः कुक्षौ तिष्ठति। तत्र बिष्णुर्देवता। पिण्डमध्येऽनेकव्यापारको भवति।" इति।

इत्थं चाग्रे स सिद्धो बहुविधमुपवर्ण्यान्ते समुपसंहरति—

"यत् सुखं स स्वर्गः। यद् दुःखं स नरकः। यत् कर्म तद् बन्धनम्। यो निर्विकल्पः सा मुक्तिः। स्वस्वरूपज्ञानदशायां निद्रान्ते जागर इव भवति।

एवं सर्वदेहेषु विश्वरूपः परमेश्वरः परमात्मा अखण्डस्वभावेन घटे घटे व्योमवत् चित्स्वरूपी तिष्ठति। एवं पिण्डसंवित्तिर्भवति।" इति।

उक्तवर्णनेनैतेनेदमायातं यज्जीवः स्वदेह एव स्थितसर्वलोकान् संस्मरन् आत्मानं परमेश्वरं च ध्यायन् यथेच्छलोकं मोक्षं वावाप्तुं समर्थः। नहि क्वचिदन्यत्र भ्रमणस्य चिन्तनस्य वा शङ्केति।

# तृतीयालोकः

## अथ जीवोत्पत्तिप्रकारप्रक्रमः

जीवस्यात्मनो वा नित्यत्वमिति पूर्वोक्तम् । अत एव कर्मानुसारं यत्र कुत्रचित् तस्य देहबहिर्भूतस्य पञ्चतन्मात्राविशिष्टस्य जीवस्य स्थितिर्निश्चितेति पापपुण्य-प्रभावादुत्पत्तिर्भवत्येव । अतस्तस्य उत्पत्तिवर्णनमप्यावश्यकम् । उत्पत्तिः केति विव्रियते—

पद्यते, पदैर्गच्छतीत्यर्थे पद गतौ धातोः कर्तरि ६३२ पदिप्रथिम्यां नित् (४।१८०) इति सूत्रेण औणादिकस्तिप्रत्ययः स च नित् । पत्तिरिति पुंल्लिङ्गशब्दस्य सिद्धिः । अत्र पत्तिशब्देन अश्व-रथ-हस्ति-योद्धृ-पदातिसेनेत्यादिशब्दा ग्रहीतुं शक्यन्ते । यतो ह्यमरकोष उक्तम्—

पदाति-पत्ति-पदगा-पादातिक-पदाजयः ।
पद्गश्च पदिकश्चाथ पादातं पत्तिसंहतिः ।। इति ।[1]

तथा च

एकेभैकरथा त्र्यश्वा पत्तिः पञ्चपदातिका । इति चापि ।[2]

किन्त्वत्र एतैरथैर्न प्रयोजनम् । अत्र तु पदनं पतनं वा पत्तिरित्यर्थे पद गतौ, पत्लृ गतौ वा धातोर्भावार्थकेन 'स्त्रियां क्तिन्' इति सूत्रेण क्तिन्नन्तेनैव पत्तिशब्दे-नार्थः । अत उत्कृष्टा प्रत्यक्षीकृता पत्तिरुद्भवः, इत्युत्पत्तिर्वाच्येति निष्कर्षः ।

**उत्पत्तिहेतोः पित्रादीनां पुत्रादित्वम्, पुत्रादीनां च पित्रादित्वम्**—इत्थं च 'तत्त्व-मसि' ( छान्दो० ६।८।७ ), 'अहं ब्रह्मास्मि' ( बृह० १।४।१० ), 'अयमात्मा ब्रह्म' ( बृह० २।५।१९ ), 'ब्रह्म वेद ब्रह्मैव भवति ' (मुण्ड० ३।२।९), ब्रह्म सत्यं जगन्मि-थ्येत्यादिश्रुतीनां बलाद् ब्रह्मेतरसकलजगतो मिथ्यात्वात् ''गच्छति परिवर्तते इति जगत्'' इत्यन्वर्थसंप्रत्ययाद् जगतः परिवर्तनशीलत्वाच्च कदाचित् पित्रादयः पुत्रादयः, पुत्रादयश्च पित्रादयो भवितुं समर्था एव सन्ति । एतेनेदमपि ज्ञायते यल्लोके सर्वे मनुष्या एकसूत्रेण सम्बद्धा एवोत्पद्यन्ते । ते सर्वेषाम् आत्मीया एव । अत एवाप्तैरुक्तमिदं सर्वथा समीचीनम्—

सर्वे भवन्तु सुखिनः सर्वे सन्तु निरामयाः ।
सर्वे भद्राणि पश्यन्तु मा कश्चिद् दुःखभाग् भवेत् ।। इति ।

एवमेव ते उत्पत्तिशीलाः पितरः स्वर्गलोकं गत्वा देवा अपि कदाचिद् भवन्ति, पुनश्च पुण्यक्षीणादिह भूमौ मनुष्यरूपेऽपि चरन्ति । यतः सन्मनुष्या अपि देवपर्याया भवन्तीति तथोक्तं चामरकोषे—

---

१. अम. २।८।६६ २. अम० २।८।८०

'राजा भट्टारको देवस्तत्सुता भर्तृदारिका'[१]
'अमरा निर्जरा देवास्त्रिदशा विबुधाः सुराः'[२]
त्रिद्वान् विपश्चिद् दोषज्ञः सन् सुधीः कोविदो बुधः'[३]

इत्यादि वर्णितम् । बुध एव वैशिष्ट्याद् विबुधोऽपि कथ्यते । पूर्वापरपारम्पर्यानुसारेण पितृपुत्रादीनामपि पूर्वापरपारम्पर्यं भवत्येव । इदं साक्षादप्यनुमेयं यत् पितृमरणात् पूर्वं पुत्रे मृते सत्यपरजन्मनि कथं तस्य पूर्वपिता पुनः पिता भवतुं क्षमो भवेत्, अपि तु स पुत्रयोग्यो भवितुमर्हति । इत्यादिकारणैर्जीवः सुखी सन् तस्योत्पन्नाः पुत्रादयोऽपि सुखिनः सन्त्विति पितॄणां सुखेनोत्पत्त्यै तेभ्यः श्राद्धतर्पणादि कार्यमावश्यकम् ।

**स्वर्गलोकात् क्रमशो जीवोत्पत्तिप्रकारे देवयान-पितृयाणपथवर्णनम्**—सत्यलोक-(ब्रह्मलोक) गमनार्थं चन्द्रलोकगमनार्थं च क्रमशः द्वौ पन्थानौ स्तः । एकोऽग्निमार्गः ( शुक्लमार्गः ), अपरश्च धूममार्गः ( कृष्णमार्गः ) इति । उत्तरायणे सूर्ये सिद्धात्मा अग्निमार्गेण चन्द्रादिलोकानुपलभमानः सत्यलोकं प्राप्नोति । सदात्मा च व्रतोपवासादिशीलो दक्षिणायने सूर्ये धूममार्गेण चन्द्रलोकं प्राप्नोति । अग्निमार्गो देवयानपन्थाः, तथा च धूममार्गः पितृयाणपन्थाः कथ्यते । एष हि "योगिनः प्रति च स्मर्यंते स्मार्ते चैते" ( ब्रह्म० शा०, अ० ४ पा०२ सू० २१ ) इति ब्रह्मसूत्रस्योपरि शारीरकमीमांसाभाष्यादवगम्यते । शारीरकभाष्यं चेत्थम्—

"योगिनः प्रति चायमहरादिकालविनियोगोऽनावृत्तये स्मर्यते । स्मार्ते चैते योगसांख्ये न श्रौते । अतो विषयभेदात् प्रमाणविशेषाच्च नास्य स्मार्तस्य कालविनियोगस्य श्रौतेषु विज्ञानेष्ववतारः । ननु—

अग्निर्ज्योतिरहः शुक्लः षण्मासा उत्तरायणम् ।
धूमो रात्रिस्तथा कृष्णः षण्मासा दक्षिणायनम् ।।[४]

इति च श्रौतावेतौ देवयानपितृयाणौ प्रत्यभिज्ञायेते स्मृतावपीति, उच्यते—'तं कालं वक्ष्यामि' (गी० ८।२३) इति स्मृतौ कालप्रतिज्ञानाद् विरोधमाशङ्क्य परिहार उक्तः । यदा पुनः स्मृतावप्यग्न्याद्या देवता स्वातिवाहिक्यो गृह्यन्ते, तदा न कश्चिद् विरोध इति ।

"विद्याकर्मणोरिति तु प्रकृतत्वात्" ( ब्र० सू० शारीरकभाष्ये अ० ३ पा०१ अनिष्टादि० ) इति ब्रह्मसूत्रानुसारं यो विद्यावान् ( ज्ञानवान् ) तस्य देवयानमार्गेण, यश्च कर्मवान् (व्रतोपवासादिशीलः) तस्य पितृयाणमार्गेण गमनं प्रकृतम् । तथा च छान्दोग्योपनिषद्—

"तद्य इत्थं विदुर्ये चेमेऽरण्ये श्रद्धा तप इत्युपासते तेऽर्चिषमभिसम्भवन्ति । अर्चिषाऽहरह्न आपूर्यमाणपक्षमापूर्यमाणपक्षाद्यान् षडुदङ्ङेति मासांस्तान् ।।१।।

---

१. अम० १।७।१३ २. अम० १।१।७
३. अम० २।७।५ ४. गी० ८।२४-२५

मासेभ्यः संवत्सरं संवत्सरादादित्यमादित्याच्चन्द्रमसं चन्द्रमसो विद्युतं तत्पुरुषो अमानवः स एनान् ब्रह्म गमयति । एष देवयानः पन्था इति ॥२॥" इत्युक्तम् ।[1]

अयम्भावः—विद्युतः सबलत्वे सोमरसः कारणम् । तथा च पूर्वं स्पष्टीकृतम् । सोमरसो यथा यव-व्रीहि-तिल-पलाश-कुशादिषु भवति तथा जलेऽतिशयेन भवति । अतो यथा पितरः पिण्डेभ्यः सत्त्वरूपं सोममाकर्षन्ति, तथा जलेभ्योऽतिशयेन । अतः पिण्डदानमिव जलदानम् ( तर्पणम् ) अप्यवश्यं कर्तव्यम् । अनेन जलदानेन यथा आत्मा यमलोकचन्द्रादिलोकान् गच्छति, तथैव क्रमशः तेनैव मार्गेण पुण्यादिक्षये यथाशीघ्रं जन्मापि लभते । अत एव छान्दोग्योपनिषदि अपेक्षितलोकान् प्रति गमनविधिस्तस्य प्रोक्तः—देवयानमार्गेण ब्रह्मज्ञानवान् गन्तात्मा स्वर्गलोकरूपाग्निनिमित्तकेन पञ्चाञ्जुलि-जलदानेन अर्चिषः ( ज्वालस्य ) स्थानं प्रथमं गच्छति, ततोऽहः, पुनरह्नः आपूर्यमाणपक्षम्, ततः षड्उदङेति मासान् ( उदीच्यां दिशि षड्-उदक्-मासनामकस्थानानि ), ततः संवत्सरम्, तत आदित्यम्, आदित्याच्चन्द्रमसम्, ततो विद्युतम्, ततोऽमानवो ब्रह्मलोकदेवस्तमात्मानं ब्रह्मलोकं गमयति । ब्रह्मलोकं गत्वा तल्लीनो भवति सः । अयमेव देवयानः पन्थाः ।

अनेनैव प्रकारेण यज्ञव्रतदानादिकर्त्ता गन्तात्मा स्वर्गरूपाग्निनिमित्तकेन पञ्चाञ्जुलिजलदानेन पितृयाणमार्गेण प्रथमं धूमस्थानं गच्छति, ततो रात्रिस्थानम्, ततोऽपरपक्षम् ( कृष्णपक्षम् ), ततो दक्षिणे षड्दक्षिणान् ( षड्दक्षिणनामकस्थानम् ) षण्मासान् गच्छति, ततः संवत्सरस्थानं वर्जयित्वा पितृलोकं प्रत्यभिगच्छति, तत आकाशम्, ततश्चन्द्रमसम् ( स्वर्गलोकम् ) प्राप्नोति । यत्र स्थाने स गच्छति, तत्र तत्प्रकृतिकरूपं धारयति । इत्थं तत्र चन्द्रलोके स अन्नमिव देवप्रियो भवति । अयमेव पितृयाणः पन्थाः । तथा च छान्दोग्योपनिषद्वर्णनम्—

"अथ य इमे ग्राम इष्टापूर्ते दत्तमित्युपासते ते धूममभिसम्भवन्ति । धूमाद्रात्रिं रात्रेरपरपक्षमपरपक्षाद् यान् षड्दक्षिणैति मासांस्तान्नैते संवत्सरमभिप्राप्नुवन्ति ॥३॥

मासेभ्यः पितृलोकं पितृलोकादाकाशमाकाशाच्चन्द्रमसम् । एष सोमो राजा । तद्देवानामन्नम् । तं देवा भक्षयन्ति" ॥४॥ इति ।[2]

इत्थमेव आकाशे जलाभावात् स शुष्कः सन् अतिसूक्ष्मदेहश्चन्द्रलोकम् ( स्वर्गलोकम् ) गत्वा तत्र जलातिशयेन जलीयदेहोऽतिकठोरो भूत्वा सुखी भवति । तत्र विशिष्टकर्मफलं भुक्त्वा अन्यसम्पात-( कर्मशेष-) भोगार्थं पुनस्तथैव पुण्यक्षयाद् द्रवीभूतः सन् जलीयशरीरेणैव आकाशं प्रत्यावर्तते । आकाशाद् वायुं वायुशरीरेण, ततो धूमं धूमशरीरेण, ततोऽभ्रम् ( आपो बिभर्तीति अभ्रम् ) अभ्रशरीरेण ( अवृष्टिकरेण श्वेतमेघशरीरेण ), ततो मेघं (मेहति सिञ्चतीति मेघस्तं)

---

१. छा० अ० ५ ख० १०।१-२ २. छा० अ० ५ ख० १०।३-४

मेघरूपेण ( वृष्टिकरेण नीलमेघशरीरेण )। इत्थं च मेघः सन् भूमौ प्रावर्षन् स आत्मा व्रीहि-यव-तिल-वनस्पति-माषाद्योषध्यपेक्षितरूपे कुत्राप्युत्पद्यते। एषां सस्यानां पाकक्रिया शैध्र्येण भवति। तद्भक्षणात् तेषां रेतो भवति। ततश्च गर्भनरकीयां यातनां भुक्त्वा तस्यात्मनो जन्म भवतीति जीवोत्पत्तिप्रकारः। तथा च छान्दोग्योपनिषद्वर्णनम्—

"तस्मिन् यावत्संपातमुषित्वा अथैतमेवाध्वानं पुनर्निवर्तन्ते। यथैतमाकाशमाकाशाद् वायुम्। वायुर्भूत्वा धूमो भवति धूमो भूत्वाऽभ्रं भवति ॥५॥

अभ्रं भूत्वा मेघो भवति। मेघो भूत्वा प्रवर्षति। त इह व्रीहियवा ओषधिवनस्पतयस्तिलमाषा इति जायन्ते। अतो वै खलु दुर्निष्प्रपतरम्। यो यो ह्यन्नमत्ति यो रेतः सिञ्चति तद्भूय एव भवति ॥ ६ ॥ इति[1]

ये ऽतिपापात्मानः क्षुद्रजीवाः सन्ति ते देवयान-पितृयाणमार्गयोर्मध्येनान्यतरेण ब्रह्मलोकं चन्द्रलोकं वा गच्छन्ति। ते तु कीटपतङ्गादय एव यमयातनाभोगार्थं यमलोके "जायस्व मृयस्व" इतिनामकं तृतीयं स्थानमेव गच्छन्ति पुनः पुनर्जननार्थं मरणार्थं च। पुनः पुनर्जननेन मरणेनैव वा ऽयं लोको न पूर्णो भवति अतो बारम्बारं जननमरणादयं लोको निन्दनीय एव। तथा च छान्दोग्योपनिषद्वचनम्—

"अथैतयोः पथोर्न कतरेण च न तानीमानि क्षुद्राण्यसकृतावर्तीनि भूतानि भवन्ति। जायस्व मृयस्वेत्येतत् तृतीयं स्थानम्। तेनासौ लोको न सम्पूर्यते। तस्माज्जुगुप्सेत तदेष लोकः ॥ ८ ॥"[2]

इत्थं च पुनः पुनर्जननमरणगतिदर्शनात् कीटपतङ्गादिगतिदर्शनाद् वा पापातिशयात्मनाम् आरोहणावरोहणे भवतः। तथा च ब्रह्मसूत्रम्—

"संयमने त्वनुभूयेतरेषामारोहावरोहौ तद्गतिदर्शनात् ॥ १३ ॥" इति।[3]

**जलतर्पणेन पञ्चाग्निषु पञ्चाहुतिदानात् पितॄणां सुखेनोत्पत्तिः**—छान्दोग्योपनिषदि लोक-( चन्द्रलोक-यमलोकादि )-पर्जन्य-पृथ्वी-पुरुष-स्त्रीरूपाः पञ्चाग्नयो वर्णिताः। जलतर्पणेन तेष्वग्निषु देवाः ( मनुष्याः ) क्रमशः श्रद्धा-सोमरस-वर्षण-अन्न-शुक्ररूपाः प्रत्येकाग्नौ एकैकाहुतिं कृत्वा पञ्चाहुतीर्ददति। यत इमे मनुष्या अपि देवा एव सन्ति। मनुष्याः सात्त्विककर्माणि कृत्वा स्वर्लोकादौ देवत्वं प्राप्नुवन्ति। ते देवाश्च पुण्यकर्मफलमुपभुज्य पुनर्मनुष्या भवन्ति। तथैव वर्णितं मनुस्मृतौ—

देवत्वं सात्त्विका यान्ति मनुष्यत्वं च राजसाः।
तिर्यक्त्वं तामसा नित्यमित्येषा त्रिविधा गतिः ॥ इति।[4]

---

१. छा० अ० ५ख० १०।५-६ २. छा० अ० ५ ख० १०।५-६
३. ब्र० सू० १३, शारी० भा०, अ० ३ पा० १, अनिष्टादि० ४. मनु० १२।४०

अन्यच्च तथा—

आत्मैव देवताः सर्वाः सर्वमात्मन्यवस्थितम्।
आत्मा हि जनयत्येषां कर्मयोगं शरीरिणाम्।। इति।[1]

इत्थं च मनुष्यरूपैर्देवैरुक्तपञ्चाग्निषु कृतेन पञ्चाहुतिरूपजलतर्पणेन तेषां पितृदेवानामुत्पत्तिः शैघ्र्येण यथासुखं भवति। एतेनेदमपि ज्ञायते यद् गार्हस्थ्यधर्मोऽन्यधर्मेभ्योऽतिपुण्यप्रदः। तथा च सैव जीवोत्पत्तिः स्पष्टीक्रियते।

पितॄणां स्वर्गलोके (चन्द्रलोके) पुण्यक्षीणाद् यमलोके कर्मफलभुक्ताद्वा पृथिव्यां तेषामात्मनां शीघ्रागमनार्थं पुण्यकर्म कर्तुं च तत्पुत्रादिवंशजैस्तर्पणमवश्यं कार्यम्। तर्पणाद् वर्षा भवति। वर्षातः स जीवात्मा पृथ्वीं समागत्य ब्रीहियवादिर्भूत्वा पुरुषोदरे शुक्ररूपे परिवर्तते। शुक्रश्च गर्भनरकयातनामुपभुज्य जन्मान्तरं गृह्णाति। जन्मान्तरं च संगृह्य सत्कर्मद्वारा स आत्मा पुनर्जन्मतो मुक्तिप्रयासं करोति। एवं च तस्यात्मनः सुखप्राप्त्या तत्प्रसादात् तर्पणकर्ता वंशजोऽपि सुखी भवति। तथा च वर्षादिक्रमसूचनार्थं छान्दोग्योपनिषदि वर्णितम्—

(१) "असौ वाव लोको गौतमाग्निः। तस्याऽऽदित्य एव समित्। रश्मयो धूमोऽहरर्चिः, चन्द्रमा अङ्गारा नक्षत्राणि विस्फुलिङ्गाः।। १।।

तस्मिन्नेतस्मिन्नग्नौ देवाः श्रद्धां जुह्वति। तस्या आहुतेः सोमो राजा सम्भवति।। २।।" इति।[2]

अयम्भावः—हे गौतम, अयं द्युर्लोकः (चन्द्रलोकादिः) प्रथमाग्निः। तस्येन्धनम् आदित्यः। सूर्यरश्मयो धूमः। तत्र दिवसो ज्वालः। अङ्गाराश्चन्द्रः। विस्फुलिङ्गाश्च नक्षत्रगणः।

ईदृशे तस्मिन् प्रथमाग्निरूपे लोके (पितृप्राप्तलोके) देवाः श्रद्धाम् (वंशजानां तर्पणश्रद्धाम्) हव्यरूपां जुह्वति। आहुतेश्च तस्याः सोमो राजा (श्रेष्ठः सोमरसः) उत्पन्नो भवति।

ततः—

(२) "पर्जन्यो वाव गौतमाग्निः। तस्य वायुरेव समित्। अभ्रं धूमो विद्युदर्चिः। अशनिरङ्गाराः। ह्लादनयो विस्फुलिङ्गाः।। १।।

तस्मिन्नेतस्मिन्नग्नौ देवाः सोमं राजानं जुह्वति। तस्या आहुतेर्वर्षं सम्भवति।। २।।" इति।[3]

अयम्भावः—हे गौतम, वृष्टेरुपकरणाभिमानः पर्जन्यो देवो द्वितीयाग्निः।

तस्येन्धनं वायुः। अभ्रम् (अवृष्टिकरः श्वेतमेघः) धूमः। विद्युत् (विद्युत्प्रदीप्तिः) ज्वालः। अङ्गारा वज्रम् (भूमौ पतनशीलम्)। विस्फुलिङ्गाश्च मेघगर्जितानि।

---

१. मनु० १२।११९ २. छा०, अ० ५ ख० ४।१-२
३. छा०, अ० ५ ख० ५।१-२

ईदृशे तस्मिन् द्वितीयाग्निरूपे पर्जन्ये देवास्तं सोमं राजानम् ( श्रेष्ठं सोमरसम् ) हव्यरूपं जुह्वति । तस्या आहुतेः फलं वर्षणं भवति ।

ततश्च—

(३) "पृथ्वी वाव गौतमाग्निः । तस्याः संवत्सर एव समित् । आकाशो धूमो रात्रिरर्चिः । दिशोऽङ्गाराः, अवान्तरदिशो विस्फुलिङ्गाः ॥ १ ॥

तस्मिन्नेतस्मिन्नग्नौ देवा वर्षं जुह्वति । तस्या आहुतेरन्नं सम्भवति ॥२॥" इति[1]

अयम्भावः—हे गौतम, पृथिवी तृतीयाग्निः । तस्याः संवत्सरः ( सम्पूर्णकालस्य प्रत्येकसंवत्सरखण्डः ) एवेन्धनम् । आकाशो धूमः । रात्रिर्ज्वालः, यतो रात्रावेवौषधयश्चन्द्रशैत्यमादाय प्रफुल्लिताः प्रकाशिता वा भवन्ति । अत एव दिशोऽङ्गाराः, विस्फुलिङ्गाश्च सर्वा विदिशः ।

एवं तस्मिन् पृथिवीरूपे तृतीयाग्नौ देवा वर्षणस्य ( वृष्टिरूपस्य ) हव्यस्याहुतीः कुर्वन्ति । ताभ्य आहुतिभ्योऽन्नोत्पत्तिर्भवति ।

ततः पुनर्वर्णितम्—

(४) "पुरुषो वाव गौतमाग्निः । तस्य वागेव समित् । प्राणो धूमो जिह्वा अर्चिः । चक्षुरङ्गाराः, श्रोत्रं विस्फुलिङ्गाः ॥१॥

तस्मिन्नेतस्मिन्नग्नौ देवा अन्नं जुह्वति । तस्या आहुतेः रेतः सम्भवति ॥२॥" इति ।[2]

अयम्भावः—हे गौतम, पृथिव्यां पुरुषः चतुर्थाग्निः । तस्य वचनमेवेन्धनम् ( स्त्री पुरुषस्य प्रियवचनादेव प्रसन्ना भवति ) । तस्य धूमः प्राण एव ( यतो बचनात् प्राणा विकृता भवन्ति ) । ज्वालो जिह्वा, वक्तुमिच्छितवचनरूपस्येन्धनस्य जिह्वाकारणत्वात् । ज्वालरूपजिह्वासाहचर्येणैव चक्षुषोः प्रसन्नत्वात् । अङ्गाराश्चक्षुर्वर्णितम् । ज्वालरूपजिह्वोच्चारित-प्रियवचनश्रोतुकामत्वाच्छ्रवणस्य विस्फुलिङ्गाः श्रवणमेवोपवर्णितम् ।

अतस्तस्मिन् चतुर्थे पुरुषाग्नौ देवा अन्नं जुह्वति । अर्थात् पुरुषाय पोषणार्थम् अन्नं ददति । एवं तस्मिन् पुरुषाग्नौ तस्या अन्नाहुतेः फलं तेजोरूपं शुक्रम् उत्पद्यते । यतः शुक्रस्य तैजसत्वममरकोषेऽपि वर्णितम् ।

तद्यथा—

शुक्रं तेजोरेतसी च बीजवीर्येन्द्रियाणि च ॥ इति[3]

ततश्च छान्दोग्योपनिषद्वर्णितम्—

(५) "योषा वाव गौतमाग्निस्तस्या उपस्थ एव समिद् यदुपमन्त्रयते स धूमो योनिरर्चिर्यदन्तः करोति तेऽङ्गारा अभिनन्दा विस्फुलिङ्गाः ।१।

---

१. छा०, अ० ५ ख० ६।१-२   २. छा०, अ०५ख७।१।२

३ अम०२।६।६२

तस्मिन्नेतस्मिन्नग्नौ देवा रेतो जुह्वति। तस्या आहुतेर्गर्भः सम्भवति ।।२।।" इति ।[1]

अयम्भावः – हे गौतम, स्त्री एवाग्निः । तस्या उपस्थः (योनेरुपरिस्थ आकारभागः ) एवेन्धनम् ( यद्दर्शनमात्रेण कामः सञ्जायते ) । गुप्तभाषणं धूमः । योनिः ( उपस्थस्यान्तर्भागः ) ज्वालः । अन्तःकरणं मैथुनं वाऽङ्गाराः । अभिनन्दो मानसिकानन्दो वा विस्फुलिङ्गाः ।

ईदृशे स्त्रीरूपे पञ्चमाग्नौ देवाः पूर्वनिर्मितशुक्रस्याहुतीः कुर्वन्ति । तस्याहुतेः फलं गर्भोत्पत्तिर्भवतीति ।

**वैशिष्ट्यावैशिष्ट्यक्रमेण जीवात्मजननम्**—एवमेव जीवोत्पत्तिर्वैशिष्ट्यावैशिष्ट्यक्रमेण भवति । तत्र वैशिष्ट्यावैशिष्ट्यक्रमश्च प्रोक्तो गरुडपुराणे—

ऋतुकालं तु नारीणां त्यजेद् दिनचतुष्टयम् ।
यतस्तस्मिन् ब्रह्महत्या पुराकृतसमुत्थिता ।।
प्रथमेऽहनि चाण्डाली द्वितीये ब्रह्मघातिनी ।
तृतीये रजकी ज्ञेया चतुर्थेऽहनि शुद्ध्यति ।।
सप्ताहात् पितृदेवानां भवेद् योग्या व्रतार्चने ।
सप्ताहमध्ये यो गर्भस्तत्संभूतिर्मलिम्लुचा ।।
युग्मासु पुत्रा जायन्ते स्त्रियोऽयुग्मासु रात्रिषु ।
पूर्वसप्तकमुत्सृज्य तस्माद् युग्मासु संविशेत् ।।
षोडशास्तु निशाः स्त्रीणां सामान्याः समुदाहृताः ।
यावच्चतुर्दशी रात्रिर्गर्भस्तिष्ठति तत्र चेत् ।।
गुणभाग्यनिधिः पुत्रस्ततो जायेत धार्मिकः ।
सा निशा तत्र सामान्यैर्न लभ्येत खगाधिप ।।[2]

अयम्भावः—पूर्वाचार्यकथनानुसारं स्त्रीणाम् ऋतुकाले संवृत्ते दिनचतुष्टयमध्ये स्त्रीप्रसङ्गेन ब्रह्महत्या-दोषो भवति । यत ऋतुकालस्य प्रथमे दिने सा चाण्डाली, द्वितीये ब्रह्मघातिनी, तृतीये रजकी भूत्वा चतुर्थे दिने शुद्धा भवति । सप्ताहानन्तरं पितृदेवानां पूजाकरणयोग्या सञ्जायते, एवं च सप्ताहमध्ये गर्भश्चेत् तदा स मलरूपो विकृत अल्पायुर्मांसपिण्डो वा सम्भवति । अतस्तत्सप्ताहानन्तरम् अष्टम-दशम-द्वादश-चतुर्दश-षोडशात्मिकासु समसङ्ख्याकरात्रिषु स्त्रीप्रसङ्गात् पुत्राः, नवमादिविषमसंख्याकरात्रिषु च कन्या जायन्ते । एवं स्त्रीणां षोडश रात्रयः सामान्यतया सन्तानस्य कृते प्रोक्ताः । किन्तु चतुर्दशरात्रौ गर्भस्तिष्ठेच्चेत् तदा गुणी भाग्यवान् धार्मिकश्च सुपुत्रो जायेत । हे गरुड, परन्तु सा रात्रिः सर्वसामान्यैर्न लभ्यते । इत्थमेव परमात्मपरब्रह्मणा सृष्टिरचना क्रियते सामान्यतया ।

**अथ परब्रह्मणः सृष्टिरचनाप्रकारः**—इतः पूर्वं सर्वेषां लोकानां वर्णनं कृतं वर्तते । तत्र यमपुरवर्णने विद्युद्यन्त्राणि प्रदर्शितानि सन्ति । मायासंवलितपरब्रह्मेच्छा-

---

१. छा०अ०५ख०८।१-२ २. (ग० पु०, प्रे० क०, १६ । ७–१२)

मात्रेण आधुनिक-प्रत्यक्षीभूतविद्युच्छक्तिमिव ब्रह्मणो माया-शक्ति विजानीयात्, या लोकेषु नानाविधविद्युद्यन्त्रैः सृष्टिं कृतवती । तेषां यन्त्राणामाधारेण क्रमशः प्रत्येकलोकाद् जीवात्मनाम् अवरोहणं भवति यच्छान्दोग्योपनिषद्वर्णनेन प्रदर्शितम् । एवमेव तद्यन्त्राधारेणैव ब्रह्मणो व्यापकत्वावच्छिन्नोऽनित्यशरीरान्ते नित्यः परमाणुरूपो जीवात्मा तच्छरीरान्निर्गतः सन् आकाशस्थविद्युद्यन्त्रैराकृष्टो भवति क्रमशस्तत्तल्लोकेषु । एवञ्च सततं तद्रचितयन्त्रैर्जीवात्मनामारोहणमवरोहणं च भवतीति विज्ञेयम् । तथा चोपवर्णितं वाराहपुराणे १९७ अध्याये गोलोकवर्णने नानायन्त्ररचनं विद्युत्तेजसा परिपूर्णम्—

दशयोजनविस्तारं ततो द्विगुणमायतम् ।
प्राकारेण परिक्षिप्तं प्रासादशतशोभितम् ॥
समालिखदिवाकाशं प्रदीप्तमिव तेजसा ।
गोपुरं तूत्तमं तत्र प्रासादशतशोभितम् ।
नानायन्त्रैः समाकीर्णं ज्वालामालासमायुतम् ॥ इति ।[1]

---

१. वा० पु० १९७।१-३

# चतुर्थालोकः

## अथ श्राद्धविधिः

**श्राद्धकर्तृपुत्राणां लक्षणम्**—इदानीं जीवस्योत्पत्तिमुक्त्वा तद्देहावसाने सद्गति-प्राप्त्यर्थं श्राद्धकर्तृभ्यश्चापि सुखसम्पत्त्यर्थमत्र श्राद्धविधिः कथ्यते संक्षेपतः। तत्र पूर्वं श्राद्धकर्तॄणां पुत्राणां लक्षणं दीयते। तथा च प्रोक्तं गरुडपुराणे—

औरसो धर्मपत्नीजस्तत्समः पुत्रिकासुतः।
क्षेत्रजः क्षेत्रजातस्तु सगोत्रेणेतरेण वा॥
गृहे प्रच्छन्न उत्पन्नो गूढजस्तत्सुतः स्मृतः।
कानीनः कन्यकाजातो मातामहसुतः स्मृतः॥
द्विबारं परिणीतायां जातः पौनर्भवः स्मृतः।
दद्यान्माता पिता वाऽयं स पुत्रो दत्तको मतः॥
मात्रा समं तु यो दत्तो गर्भः सोऽत्र सहोटजः।
उपलब्धो भवेद् यस्तु सोपविद्धो भवेत् सुतः॥
पिण्डदायहरस्यैषां पूर्वाभावे नरः परः।
कुर्वीत पार्वणश्राद्धम् औरसो विधिवत् सुतः॥
कुर्युरन्ये सुताः श्राद्धमेकोद्दिष्टं तु तादृशाः।
आसुरादिविवाहेन जातश्च पिशुनात् खग॥
सर्वदानानि देयानि घटदानादृते खग।
एकमुद्दिश्य यच्छ्राद्धमेकोद्दिष्टं न पार्वणम्॥
अनुद्दिश्य तु यच्छ्राद्धं पार्वणं मुनयो विदुः।
संगृहीतः सुतो नैव ह्येकोद्दिष्टं न पार्वणम्॥[1]

अयम्भावः—स्वीयो धर्मपत्नीपुत्र औरसः पुत्रः, स्वकन्यायाः पुत्र औरस-समानः, स पुत्रिकासुतः कथ्यते। स्वस्त्रियाम् अन्येन सगोत्रेणापरगोत्रेण वा किन्तु सवर्णेनोत्पन्नः क्षेत्रजः। स्वगृह एवान्येन केनचिद् गुप्तरूपेणोत्पादितः पुत्रो गूढजः। अविवाहितायां कन्यायामुत्पन्नः कानीनोऽथवा मातामह-पुत्रः कथ्यते। एकबारं विवाहितायामपि पुनर्द्वितीयवारं विवाहितायां स्त्रियां जातः पुत्रः पौनर्भवः स्मृतः (नफैता लोके प्रसिद्धः)। मात्रा पित्रा वा स्वेच्छया अन्यस्मै दत्तः पुत्रो दत्तकः कथ्यते। गर्भिणी नारी यदि कस्मैचिद् दत्ता स्यात्तर्हि तद्गर्भेणोत्पन्नः सुतः सहो-टजः स्मर्यते। पुत्रेण सह यदि काचिन्नारी प्राप्ता स्यात्तर्हि सहागतः स पुत्रोऽथवा मात्रा विनापि संयोगवशाद् एकाकी प्राप्तः पुत्रो वा सोपविद्धः कथ्यते। एतादृशेषु पुत्रेषु औरसः श्रेष्ठतमः पुत्रो दायभागसंग्रहीता भवति, अथवा पूर्वपूर्वाभावे परः पुत्रस्तत्पितृभागसंहर्ता स्यात्।

---

१. ग० पु०, प्रे० क० ११।१८-२८

**पार्वणश्राद्धकर्त्ता**—एतेषां पुत्राणां मध्ये औरसः पुत्र एव पार्वणश्राद्धं कर्तुं समर्थोऽन्येऽसमर्था एव। अन्ये तु केवलमेकोद्दिष्टम् एव श्राद्धं कर्तुं सर्वदानानि दातुं च शक्नुवन्ति। किन्त्वासुरादिविवाहेन जातः पुत्रः सर्वदानानि कर्तुं समर्थः सन् कुम्भदानं कर्तुं न क्षमते।

पितरि जीवति पितामहादौ मृते, अथवा पितरि मृते पितामहादौ जीवति सति किं विधेयमिति ब्रह्मपुराणे वर्णितम्—

मृतेषु पिण्डं दातव्यं जीवन्तं चापि भोजयेत्।
सपिण्डीकरणं नास्ति न च पार्वणमिष्यते।। इति।[1]

श्राद्धकर्ता पितृपितामहप्रपितामहादीनां मध्ये केवलं मृताय पिण्डं दद्यात्, तेषु जीविताय सुष्ठु भोजनं दद्यात्। किन्तु तेषु कस्मिंश्चित् जीविते सति एकोद्दिष्टं श्राद्धं (एकादशाहपर्यन्तकं) कृत्वा सपिण्डीकरणं पार्वणश्राद्धं वा न कुर्यात्। तथान्यच्च

यस्मै दद्यात् पिता श्राद्धं तस्मै दद्यात् सुतः स्वयम्।
एवं न हीयते धर्मो लौकिको वैदिकस्तथा।। इति।[2]

अर्थादुपर्युक्तानुसारेण पितरि जीवति तस्य पितुर्यस्मै श्राद्धविधानं निर्णीतं तस्मा एव पुत्रोऽपि श्राद्धं कुर्यात्, केवलं सपिण्डीकरणं पार्वणश्राद्धं च न कुर्यात्। तथा चाप्तवचनम्

विवाहव्रतचूडासु वर्षमर्धं तदर्धकम्।
महालयं गयाश्राद्धं न कुर्यात् तिलतर्पणम्।। इति।

अर्थाद् गृहे विवाहे कृते वर्षैकम्, व्रतबन्धेऽर्धवर्षम् (षण्मासम्) तथा चूडाकर्मणि मासत्रयं यावत् तस्मिन् वर्षे पितृपक्षीयश्राद्धं गयाश्राद्धं तथा तर्पणकर्म च न कुर्यात्।

**अपुत्रादेः श्राद्धकर्तारः**—उक्तपुत्रादिभ्यो भिन्ना अपि गुरु-शिष्य-यजमान-पुरोहित-मित्रादयः श्रद्धावन्तः श्राद्धकर्तारः सन्ति। तेषां मृतजनैः सह पूर्वं कृतानां वार्तालापानामङ्कनम् आधुनिकचलचित्रपट इव परा-पश्यन्ती-मध्यमा-वैखरीषु मध्ये स्फोटात्मके नित्यमध्यमा-वाग्रूपे पटे भवति। शब्दगुणकमाकाशमिति नैयायिकसिद्धान्तेन तत्राकाशस्थे नित्ये मध्यमा-वाग्रूपे पटे श्रद्धया कृतानां वार्तालापानां नादांशस्याङ्कनं विराजत एव। तन्नादांशतो वार्तालापकर्तृभिः सह विद्युत्सूत्रं मृतात्मनः सूत्रितं भवति। येनोक्तैर्गुरुशिष्यादिभिरपि कृतानां श्राद्धानां सत्त्वांशं प्राप्नोति स आत्मा। नादांशस्य नित्यत्वं चेत्थं मञ्जूषायां शक्त्याश्रये श्रीनागेशभट्टेन स्पष्टीकृतम्—

"तत्र मध्यमायां यो नादांशस्तस्यैव स्फोटात्मनो वाचकत्वेनाक्षतिः। स च यद्यपि एकोऽखण्ड एकैकवर्णेनाप्यभिव्यज्यते तथापि अन्त्यवर्णाभिव्यक्तो बोधहेतुः। अतो नैकवर्णजाभिव्यक्त्युत्तरम् अर्थप्रत्ययः। तत्र च व्यञ्जकरूपप्रतिबिम्बनात् तद्रूपरूषितैव (तद्रूपसंभिन्नैव) तदभिव्यक्तिरित्येकोऽपि नानात्वमिवापन्नः।" इति।[3]

---

१. ब्र. पु. २२०।२०६ २. ब्र. पु. २२०।२०६
३. १६८६ वैक्रमाब्दे मुद्रितमञ्जूषायाम् पृ० १५१

तथैवोक्तं वाक्यपदीये—

अनादिनिधनं ब्रह्म शब्दतत्त्वं यदक्षरम्।
विवर्ततेऽर्थभावेन प्रक्रिया जगतो यतः ॥[1]

**संगृहीतः ( दासीपुत्रादिः ) एकोद्दिष्ट-पार्वणश्राद्धं कर्तुमसमर्थः**—पूर्वमत्र एकोद्दिष्ट-श्राद्धस्य पार्वणश्राद्धस्य च लक्षणं दीयते। तद्यथा—

"एकं प्रेतमेवोद्दिश्य यच्छ्राद्धं क्रियते तद् एकोद्दिष्टं श्राद्धम्। प्रेतमनुद्दिश्य यच्छ्राद्धं क्रियते तत् पार्वणश्राद्धम्" इति।

तत्र संगृहीतः पुत्रः ( दासीपुत्रादिः ) एकोद्दिष्टं पार्वणं चापि कर्तुं न समर्थः। स तु तीर्थेषु गत्वा केवलं ब्राह्मणान् भोजयेत्, श्राद्धं तु न कुर्यात्।

**नित्य-नैमित्तिक-काम्य-वृद्धि-पार्वणरूपेण श्राद्धस्य पञ्च भेदाः**—अथेदानीं श्राद्धविधिः प्रक्रम्यते। तत्र महामहोपाध्यायश्रीरुद्रधरकृतं श्राद्धविवेकमनुसृत्य संक्षेपतः श्राद्ध-स्वरूपभेदः कथ्यते। यत्र बृहस्पतिना पञ्चविधं श्राद्धमुक्तम्—

"बृहस्पतिः

नित्यं नैमित्तिकं काम्यं वृद्धिश्राद्धं तथैव च।
पार्वणं चेति मनुना श्राद्धं पञ्चविधं स्मृतम्॥

**एतद् विवृतं भविष्यपुराणे**—

अहन्यहनि यच्छ्राद्धं तन्नित्यमिति कीर्तितम्।
वैश्वदेवविहीनं तदशक्तावुदकेन तु॥
एकोद्दिष्टं तु यच्छ्राद्धं तन्नैमित्तिकमुच्यते।
तदप्यदेवं कर्तव्यमयुग्मान् भोजयेद् द्विजान्॥
कामाय विहितं काम्यमभिप्रेतार्थसिद्धये।
पार्वणेन विधानेन तदप्युक्तं खगाधिप॥
वृद्धौ यत् क्रियते श्राद्धं वृद्धिश्राद्धं तदुच्यते।
सर्वं प्रदक्षिणं कार्यं पूर्वाह्णे तूपवीतिना॥
अमावास्यां यत् क्रियते तत् पार्वणमुदाहृतम्।
क्रियते वा पर्वणि यत् पार्वणमिति स्थितिः॥"[2]

पार्वणम्=भिन्नभिन्नसामयिकं श्राद्धम्। पर्वणि भवमिति पर्वन्=शब्दाद् भवार्थे—तत्र भवः (४।३।५३) इत्यण्। तद्धितेष्वचामादेः (७।२।११७) इत्यादि-वृद्धिः। तत्र—

पक्ष्माक्षिलोम्नि किञ्जल्के तन्त्वाद्यंशेऽप्यणीयसि।
तिथिभेदे क्षणे पर्व वर्त्म नेत्रच्छदेऽध्वनि॥[3] इति।

इत्यमरेण पर्वन्-शब्दः पितॄणां पार्वणश्राद्धार्थं कृष्णपक्षीय—भिन्न-भिन्न-तिथिसमयेऽर्थे प्रोक्तः। तथा च मनुनोक्तः कालः—

---

१. वा० प० १।१ २. श्राद्धविवेके, पृ०१ ३. (अम० ३।३।१२१)

कृष्णपक्षे दशम्यादौ वर्जयित्वा चतुर्दशीम् ।
श्राद्धे प्रशस्तास्तिथयो यथैता न तथेतराः ।।[१] इति ।

अर्थात् श्राद्धार्थं कृष्णपक्षे चतुर्दशीं त्यक्त्वा यथा दशम्यादितोऽमावास्यान्ततिथयः श्रेष्ठाः, तथेतराः प्रतिपदादयो न । एतेन कृष्णपक्षीयाः सर्वतिथयः सामान्यतः श्राद्धे कल्पिता एव । तत्रापि पूर्वाह्णकालादपराह्णकालो विशिष्टः । तथा च मनुस्मृतौ—

यथा चैवापरः पक्षः पूर्वपक्षाद् विशिष्यते ।
तथा श्राद्धस्य पूर्वाह्णादपराह्णो विशिष्यते ।।[२] इति ।

ज्योतिः शास्त्रानुसारं मासस्य पूर्वः पक्षः शुक्लपक्षो भवतीत्यपरः कृष्णपक्षो बोध्य इति ।

तथोपर्युक्तश्राद्धविवेके बृहस्पतिमतानुसारं श्राद्धं पञ्चविधमुक्तम्, तद् भविष्यपुराणे विवृतम् । तद् यथा—

१—नित्यश्राद्धम् ।
२—नैमित्तिकश्राद्धम् ।
३—काम्यश्राद्धम् ।
४—वृद्धिश्राद्धम् ।
५—पार्वणश्राद्धं च ।

तेषां भविष्यपुराणे विवेचनमित्थं कृतम्—

१—नित्यश्राद्धम्—

प्रतिदिनं यच्छ्राद्धं क्रियते तन्नित्यश्राद्धम्, तच्छ्राद्धकर्तरि अशक्ते सति केवलमुदकेनैव कार्यं स्यात् ।

२—नैमित्तिकश्राद्धम्—

वैश्वदेवं विना यदेकोद्दिष्टश्राद्धं क्रियते तन्नैमित्तिकश्राद्धम् । अत्र नैमित्तिकपदेन षोडश प्रेतश्राद्धान्यपि संगृह्यन्ते, एकोद्दिष्टरूपत्वात्तेषाम् ।

३—काम्यश्राद्धम्—

अभीप्सितसिद्ध्यर्थम् (भूतप्रेतादिवाधाशङ्कन-निवृत्त्यर्थम्) पार्वणविधिना यच्छ्राद्धं क्रियते तत् काम्यश्राद्धम् ।

४—वृद्धिश्राद्धम्—

यज्ञोपवीतिना कर्त्रा वृद्धौ सत्यां प्रसन्नतया पूर्वाह्णे यच्छ्राद्धं क्रियते सर्वश्राद्धीयवस्तुस्थलं सप्रदक्षिणं क्रियते तद् वृद्धिश्राद्धम् ।

(५) पावर्णश्राद्धम्—सामान्यतोऽमावास्यायां तिथौ, यस्मिन् कस्मिंश्चित् पर्वणि वा यच्छ्राद्धं क्रियते तत् पार्वणश्राद्धम् । अथवा ६६ पृष्ठे पार्वणविषये विवेचितेन विधिना पितृणां कृष्णपक्षीय-विभिन्ननिधनतिथौ यच्छ्राद्धं तत् पार्वणं

१. (मनु० ३।२७६) २. (मनु० ३।२७८)

बोद्धव्यम्। श्राद्धविवेके तद् विवृतं यत्र नैमित्तिकपदेन षोडश प्रेतश्रद्धान्यपि संगृह्यन्ते, एकोदिष्टरूपत्वात् तेषाम्।

**अथ गोष्ठीश्राद्धलक्षणम्**—धार्मिकाणां गोष्ठ्यां (समुदाये) पितृतुष्ट्यर्थं सर्वैः सम्भूय श्राद्धसामग्रीसम्पादनेन तीर्थादौ युगपद् यच्छ्राद्धं क्रियते तद् गोष्ठीश्राद्धम्। तदुक्तमाप्तैः—

गोष्ठ्यां यत्क्रियते श्राद्धं गोष्ठीश्राद्धं तदुच्यते।
बहूनां विदुषां सम्पत्सुखार्थं पितृतृप्तये॥ इति।

पावर्णपदेन गोष्ठीश्राद्धाद्यपि स्मृत्यन्तरेणोक्तं संगृह्यते, तेषां सर्वेषां पार्वणविधिना विधानात्। तथा च श्राद्धविवेके—

"अत्र यद्यपि पर्वणि भवं पार्वणमिति व्युत्पत्तिः, तथापि व्युत्पत्तिमात्रमिदं सिद्धम्। वस्तुतो देवश्राद्धपूर्वकं षट्पुरुषश्राद्धं पार्वणम्। अत एव "क्षयाहे पार्वणं कुर्वन्नधोऽधो याति मानवः" इति श्राद्धं निषिद्ध्य 'अहन्येकादशे प्राप्ते पार्वणं तु विधीयते' इत्यादि स्मृतिषु देवश्राद्धपूर्वक-षट्पुरुषश्राद्धविषयतयैव निषेधो विधिश्चोपपद्यते। अन्यथा पर्वव्यतिरिक्तकाले पार्वणस्यासम्भवाद् विधिनिषेधानुपपत्तिः। स्मृतिसार-महार्णव-हलायुध-कल्पतरु-पितृभक्तिषु स्मृतिनिबन्धेष्वपि 'औरस-क्षेत्र-जाभ्यां साग्निकाभ्याम्, मृताहे पार्वणं कर्त्तव्यम्' इति यल्लिखितं तदपि संगच्छते। अन्यथा तद् वचनमसम्भवादयुक्तमेव स्यात्। लोकेऽपि च प्रामाणिकास्त्वपरपक्षीय-प्रतिपदादिश्राद्धेष्वपि पार्वणपदं प्रयुञ्जते॥"[1] इति।

अयम्भावः—नैमित्तिकश्राद्धम् एकोद्दिष्टश्राद्धमुक्तम्। षोडशप्रेतश्राद्धान्यपि एकोद्देशेनैव (प्रेतोद्देशेनैव) क्रियन्ते, अतः षोडश-प्रेतश्राद्धानामपि नैमित्तिकश्राद्धत्वं सिद्धमेव। गोशालायाम्, नदीतटे, वाटिकादौ वा गृहाद्दूरे यद् गोष्ठीश्राद्धादि क्रियते तत् स्मृत्यन्तरेषु पार्वणविधिना भवतीत्युक्तम्, अतस्तदपि पार्वणपदेन संगृह्यते। इत्थं पार्वणश्राद्धस्य न काचिद् विशेषतिथिरिति ज्ञेयम्।

पर्वणि भवं पार्वणमिति व्युत्पत्त्या तु केवलं पार्वणशब्दस्य सिद्धिरेव भवति, न तु पर्वणस्तिथिस्तच्छ्राद्धस्य कृते निर्णीयते। वस्तुतस्तु देवश्राद्धपूर्वकं षट्पुरुष-श्राद्धम् (पित्रादित्रय-मातामहादित्रयेतत्षट्पुरुषश्राद्धम्) एव पार्वणश्राद्धम् इति प्रतिष्ठितम्। अत एव एतत् पार्वणश्राद्धं गृहस्थैः मृतदिने न कर्तव्यम्, 'क्षयाहे पार्वणं कुर्वन्नधोऽधो याति मानवः' इति स्मृतिनिषेधात्। अपि त्वेतच्छ्राद्धं मृतदिनाद् एकादशाहे कर्तव्यम्, 'अहन्येकादशे प्राप्ते पार्वणं तु विधीयते' इति स्मृतिविधानात्। साग्निकाभ्याम् औरस-क्षेत्रजाभ्यां पुत्राभ्यां तु मृतदिने पार्वणश्राद्धं कर्तव्यम्, तयोः कृते एव 'मृताहे पार्वणं कर्तव्यम्' इति स्मृतिवचनस्य करणीयत्वात्। अत एव पर्वणि भवं पार्वणमिति व्युत्पत्तिरुदासीना, पर्वणोऽतिरिक्तकालेऽपि पार्वणस्य विधानात्। एवंविधोक्तनिषेधविधिभ्यां ज्ञायते यत् पार्वणस्य न कापि विशेषा तिथिर्निश्चिता। तथा च स्मृतिसार-महार्णव-हलायुधादिस्मृतिनिबन्धेषु साग्निकयो-

---

१. श्रा० वि०, पृ० १

रौरसक्षेत्रजयोः कृते 'मृताहे पार्वणं कर्तव्यम्' इति यल्लिखितं तदपि सुसंगच्छते। यतो यस्मिन् कस्मिन् दिने तयोर्मृ तयोः सतोस्तयोस्तद्दिने एव पार्वणं पूर्वोक्तवचनेन सिद्धं भवति। लोकेऽपि चापरपक्षीय-(आश्विनकृष्णपक्षीय)-प्रतिपदादिश्राद्धानामपि प्रामाणिकतां कुर्वद्भिर्विद्वद्भिः पार्वणत्वं प्रयुक्तम्।

**अथ आमश्राद्धम्**—आपत्तिकाले, विशेषकारणवशाद् अग्नेरभावे, तीर्थे, चन्द्र-सूर्यग्रहणे वा द्विजैरामश्राद्धं कर्तुं शक्यम्। आमपदेन अपक्वान्नं विज्ञेयम्। अतः पिण्याकेन यवपिष्टेन वा श्राद्धं करणीयम्। किन्तु मासिकवार्षिकाद्येकोद्दिष्टे श्राद्धे, अमावास्यादि-काम्यश्राद्धे च आमान्नेन श्राद्धं न विधेयम्। पत्नीहीनः, रजस्वला-स्त्रीरहितः, विदेशस्थो वा द्विजः आमश्राद्धं कुर्यात्। शूद्रेण तु सर्वदा आम-श्राद्धमेव कार्यम्।

तथा चोक्तं श्राद्धविवेके—

आपद्यनग्नौ तीर्थे च चन्द्रसूर्यग्रहे तथा।
आमश्राद्धं द्विजैः कार्यं शूद्रेण तु सदैव हि॥[1]

तथाह लघुहारीतः—

श्राद्धविघ्ने द्विजातीनामामश्राद्धं प्रकीर्तितम्।
अमावास्यादि नियतं माससंवत्सरादृते॥

तथा चाह जाबालिः—

आमश्राद्धप्रदोऽनग्निः सर्वत्रैव मनीषिणः।
येनाग्नौ करणं कुर्यात् पिण्डांस्तेनैव निर्वपेत्॥
अपत्नीकः प्रवासी च यस्य भार्या रजस्वला।
आमश्राद्धं द्विजैः कार्यं शूद्रेण तु सदैव हि॥[2] इति।"

**शूद्रेभ्योऽपि वृषोत्सर्गनिर्देशः**—वेदोच्चारणेनैव वृषोत्सर्ग-विधानम्। शूद्रस्यापि कृते वृषोत्सर्गनिर्देशः। तथा च विवृतम्—

'वर्णतस्ताम्रकपिलो ब्राह्मणस्य प्रशस्यते।
स्निग्धरक्तेन वर्णेन क्षत्रियस्य प्रशस्यते।
काञ्चनाभेन वैश्यस्य कृष्णेनाप्यन्त्यजन्मनः॥[3]

अयम्भावः—वृषोत्सर्गे ब्राह्मणस्य कृते पाटलः (श्वेततायुक्त ईषद्रक्तः), क्षत्रियस्य रक्तः, वैश्यस्य स्वर्णिमः, तथा शूद्रस्य कृष्णो वृषः प्रशस्यते। एतेन शूद्रस्य कृतेऽपि वृषोत्सर्गविधानेन 'एतयैव उत्सृजेरन्' इति वृषोत्सर्गे वैदिकवाक्यकरण-त्वनियमविधानात् तदंशेन (वैदिकवाक्येन) विना उत्सर्गस्य अनुपपत्तेः। तथानुप-पत्त्यापि शूद्रस्य वृषोत्सर्गवाक्ये तदंशे वेदोच्चारणमपि विहितं भवतीति ज्ञेयम्। **अथ मरणकृत्यवर्णनम्**—

---

१. श्रा० वि०, पृष्ठ ८  २. श्रा० वि०, पृ० ९  ३. श्रा० वि०, पृ० ९

**तत्र आशिशोर्यौवनं यावद् वर्णितावस्थाभिर्मरणकृत्यवर्णनम्**—चतुर्दशमासपर्यन्तकं बालकं केवलं भूमौ निखनेत्। अन्यन्न किञ्चित् कार्यम्। ततोऽधिकवयस्कस्य यथावर्णितविधानमनुसृत्य देहदाहादिकं कुर्यात्। तथा च वर्णितं गरुडपुराणे प्रेतकल्पे—

भूमौ निखन्यतां बालो ह्यावर्षद्वयमासिकः।
ततः परं खगश्रेष्ठ देहदाहो यथाविधि ॥[1] इति।

वर्षपर्यन्तं बालकस्य प्रायो दन्तजननं सम्भवति। तत्समयं यावद् बालकः 'शिशुः' कथ्यते। शैशवकाले स उत्तानविधिना शेते, अतः उत्तानशयोऽपि कथ्यते। 'चूडावर्षात् तृतीयात् प्रभवति विषमेऽष्टार्करिक्ताद्यषष्ठी' ( मुहूर्तचिन्तामणौ सं० प्र०, श्लो० २९ ) इति तृतीयवर्षे बालकस्य मुण्डनकालो भवति। अतः एकवर्षानन्तरं तृतीयवर्षं मुण्डनकालं यावद् बालकः 'बालो बालको वा' कथ्यते। तदनन्तरं पञ्चमे वर्षे मुहूर्तचिन्तामणौ 'विप्राणां व्रतबन्धनं निगदितं गर्भाज्जनेर्वाऽष्टमे। वर्षे वाऽप्यथ पञ्चमे, ( मु० चि० सं० प्र० श्लो० ३९ ) इति यज्ञोपवीतकालो मौञ्जिबन्धनकालो वा भवति बालकस्य। अतस्तृतीयवर्षानन्तरं यज्ञोपवीतकालं मौञ्जिकालं वा पञ्चवर्षं यावत् सः 'कुमारः' कथ्यते। तदनन्तरं नववर्षं यावत् पौगण्डः ( अज्ञातयौवनः ) कथ्यते। ततः षोडशवर्षं यावत् किशोरः ( नवयुवकः ) कथ्यते। अतः परं बालकस्य यौवनावस्था भवति। तत्र पञ्चवर्षीये बालके मृते सति केवलं सप्तविंशतिर्ब्राह्मणा भोजनीयाः। स्वल्पमोहकरणात् स्वल्पकर्मानुसारं च पञ्चवर्षाधिके मृते सति बालके तु तस्य दाहादिक्रं कृत्वा दशगात्रार्थं दशपिण्डादिकं चापि सर्वं कर्तव्यम्। तथा चोक्तं गरुडपुराणे—

शिशुरादन्तजननाद् बालः स्याद् यावदाशिखम्।
कथ्यते सर्वशास्त्रेषु कुमारो मौञ्जबन्धनात् ॥
बालस्यार्थे भोजनीया ब्राह्मणाः सप्तविंशतिः।
आपञ्चवर्षात् कौमारः पोगण्डो नवहायनः ॥
किशोरः षोडशसमस्ततो यौवनमासितम्।
पञ्चवर्षाधिके पुंसि पञ्चत्वं तु गते यदि ॥
पूर्वं तु ह्येवं कर्तव्यमीहते दशपिण्डकम्।
स्वल्पकर्मप्रसङ्गाच्च स्वल्पमोहनिबन्धनात् ॥[2] इति।

पञ्चवर्षवयस्को बालः संस्कृतं (भूर्जितादिकमन्नादिकम्) वस्तु न भुङ्क्ते, केवलं दुग्धादि पेयमेव पिबति, अतः स संस्कारसम्पन्नतां नेहते। अत एव तस्मिन् मृते सति केवलं सप्तविंशतिः ब्राह्मणा एव भोजनीयाः, नातिरिक्तं मृतसंस्कारादिकं कार्यम्। तथाविधिः पूर्वोक्त एव। पञ्चवर्षाधिके मृते तु सर्वं वृषोत्सर्गादिकमपि कार्यम्। तथा चोपवर्णितं व्यासेन—

जन्मतः पञ्च वर्षाणि भुङ्क्ते दत्तमसंस्कृतम्।
पञ्चवर्षाधिके बाले विपत्तिर्यदि जायते ॥

---

१. ग० पु०, प्रे० क० १०।१९ २. (ग० पु० प्रे० क०, १०।२०—२३)

वृषोत्सर्गादिकं कर्म कर्तव्यमुदकं ततः ।
अहन्यहनि सम्प्राप्ते कुर्याच्छ्राद्धानि षोडश ॥
पायसेन गुडेनैव पिण्डान् दद्यात् पृथक् पृथक् ।
घटदानं मासिकं तु त्रयोदश पदानि च ।
भोजनं ब्राह्मणानां च स्वशक्त्या च खगेश्वर ॥[1] इति ।

'आत्मा वै जायते पुत्रः' इति वेदेषूक्तत्वात् स एवात्मा उपयुक्तमृतसंस्कारैः संस्कृतः सन् पुनः तस्मिन्नेव कुले पुत्रपौत्रादिपुरुषेष्वन्यतमश्चिरायुर्भूत्वा पितृप्रीतेर्विवर्धनः सर्वसौख्यप्रदः पुत्रो भवति । तथैवोक्तं गरुडपुराणे व्यासेन—

पुनश्चिरायुषो भूत्वा कुले भवति धीमताम् ।
सर्वसौख्यप्रदः पुत्रः पितृप्रीतिविवर्धनः ॥
आत्मा वै जायते पुत्र इति वेदेषु निश्चितम् ॥[2] इति ।

## अथ श्राद्धकालनिर्णयः

**तत्र अधिमाससम्पाते श्राद्धनिर्णयः**—मरणतिथितो वर्षाभ्यन्तरेऽधिमाससंपातो भवेच्चेत्, तर्हि मासिकश्राद्धे दिनैकवृद्धिं कृत्वा द्वादशमासिकश्राद्धस्थाने त्रयोदशमासिकश्राद्धानि करणीयानि । वर्षसपिण्डनमिदं मुख्यपक्षे ।

एवं चाधिमासे पतिते सति मासिकश्राद्धेषु द्वादशमासिकस्थाने त्रयोदशभिर्दिनैस्त्रयोदशमासिकानि श्राद्धानि कृत्वा चतुर्दशदिने सपिण्डनं कार्यम् इति । सपिण्डनमिदं गौणपक्षे ।

तथा च श्राद्धविवेके विष्णुवाक्यम्—

'संवत्सराभ्यन्तरे यद्यधिमासपातो भवति तदा मासिकार्थं दिनमेकं वर्द्धयेत् । तथैवाधिमाससम्भवे एकदिनश्राद्धवृद्ध्या त्रयोदशभिर्दिनैस्त्रयोदशमासिकानि कृत्वा चतुर्दशेऽह्नि सपिण्डनं कुर्यात्, इति पर्यवसितोऽर्थो भवति' ॥[3] इति ।

एतेनेदमायातं यदधिमासे पतिते सत्येकमासिकश्राद्धमधिमासार्थमधिकं कार्यमिति । किन्तु द्वादशमासिकश्राद्धस्थाने सर्वत्र षोडशश्राद्धानि ज्ञेयानि यदग्रे वक्ष्यते ।

## सामान्यतः सपिण्डनस्य प्रकारद्वयम्—

१–वर्षसपिण्डनम् । २–द्वादशाहसपिण्डनं चेति द्विविधं सपिण्डनम् ।

१—**वर्षसपिण्डनम्**—मासक्रमेण मासिकश्राद्धेषु क्रियमाणेषु, वर्षे सम्प्राप्ते सपिण्डने मुख्यपक्षानुरूपेण कर्तव्ये सति सजातीयतिथावेव ( मरणतिथावेव ) त्रयोदशमासानां त्रयोदशमासिकानि श्राद्धानि कर्तव्यानि । तत्र त्रयोदशमासेषु ऊनषाण्मासिकश्राद्धं षण्मासात् पूर्वदिने, तथा ऊनाब्दिकश्राद्धं पूर्णवर्षदिनात् पूर्वदिने कार्यम् । एतद्द्वयश्राद्धातिरिक्तान्यद्वादशमासिकश्राद्धानि यथाक्रममासेषु मरणतिथौ कर्तव्यानि । ततोऽपरस्मिन् दिने सपिण्डनं कर्तव्यम् ।

---

१. ग० पु०, प्रे० क० ११।४-६ २, ग० पु०, प्रे० क० ११।१०-११ ३. श्रा० वि, पृ० १३

एतेनेदमायातं यद् अधिमासातिरिक्तस्थले द्वादशमासिकश्राद्धानि उक्तविधिनैव कर्तव्यानीति ऊनमासिक-त्रैपाक्षिक-ऊनषाण्मासिक-ऊनाब्दिकश्राद्धान्यादाय षोडशश्राद्धानि ज्ञेयानि। वर्षसपिण्डनमिदं मुख्यपक्षे। तथा च प्रोक्तं श्राद्धविवेके—

"तथा च मुख्यपक्षे वर्षसपिण्डने मासक्रमेणैव त्रयोदशषु मासेषु त्रयोदशमासिकानि मरणतिथिसजातीयतिथौ कर्तव्यानीति, एकाहोनषाण्मासिके ऊनषाण्मासिकम्, एकाहोनवर्षे ऊनवार्षिकं श्राद्धं कर्तव्यम्॥"[1] इति।

**२-द्वादशाहसपिण्डनम्**—मरणदिनाद् द्वादशाहे सपिण्डने कर्तव्ये सति तद्दिन एव अधिमासमादाय त्रयोदशमासिकानि क्रमपूर्वकानि श्राद्धानि कर्तव्यानि। ततः सपिण्डनं कार्यमिति। द्वादशाहसपिण्डनमिदं गौणपक्षे। तथा च प्रोक्तं श्रीरुद्रधरमहामहोपाध्यायेन श्राद्धविवेके—

"द्वादशदिने सपिण्डने प्रथममासिक-द्वितीयमासिक-तृतीयमासिक-चतुर्थमासिक-पञ्चममासिक-षष्ठमासिक-सप्तममासिकाष्टममासिक-नवममासिक-दशममासिकैकादशमासिक-द्वादशमासिकोनवार्षिक-त्रयोदशमासिकानि अनुक्रमेणैकस्मिन् दिने कर्तव्यानि।[2]

**अथ षोडशश्राद्धानि**

द्वादशमासिकश्राद्धानीत्यस्य षोडशमासिकश्राद्धानीत्यर्थो बोद्धव्यः। द्वादशमासिकश्राद्धानि च (एकादशाहश्राद्धस्य पायसचरुणैव सम्भवात्) पायसचरुणा एकादशाहश्राद्ध-त्रैपाक्षिक-ऊनषाण्मासिक-ऊनाब्दिकश्राद्धान्यप्यादाय षोडशश्राद्धानि कथ्यन्ते। वार्षिकश्राद्धाभ्यन्तरेऽधिमासे तु संपाते सति एकमासिकश्राद्धमधिकं भवतीति सप्तदशश्राद्धानि ज्ञेयानि तदा। तथा चाह गरुडपुराणे षोडशश्राद्धम्—

एवं षोडशकं प्राहुः पुरातनविदो जनाः।
द्वादश-प्रतिमास्यानि श्राद्धान्येकादशं तथा॥
त्रिपक्षसम्भवं चैव द्वे ऊने खग षोडश।
आद्यं तु सर्वशुद्ध्यर्थं कृत्वा तु पितृषोडशम्॥[3]

सर्वेषाम् आत्मकुलजननां शुद्ध्यर्थमेतद् अधममध्योत्तमषोडशश्राद्धपूर्वकं वार्षिकश्राद्धं कृत्वैव पार्वणादिश्राद्धं कर्तुं शक्यं स्यात्, अत एव पितृषोडशं नामैतच्छ्राद्धम् आद्यश्राद्धं कथ्यते।

एवंविधषोडशश्राद्धेषु ऊनमासिकश्राद्धम् पूर्णैकमासात् पूर्वदिनेकार्यम्, अथवा ऊनमासिकश्राद्धस्थाने पायसचरुणा एकादशाहश्राद्धं पूर्वकृतं ज्ञेयम्। तथैव त्रैपाक्षिकं पूर्णे पक्षत्रये मरणतिथौ, ऊनषाण्मासिकं षण्मासात् पूर्वदिने, ऊनाब्दिकं च पूर्ण-

---

१. श्रा० वि०, पृ० १३ २. श्रा० वि०, पृ० १३
३. ग० पु०, प्रे० ख० २५।५४—५५

वर्षात् पूर्वदिन एव कार्यं स्यात्। एतत् सर्वं तत्रैव श्राद्धविवेके मासिकादिश्राद्ध-विविधवर्णनेनापि आयाति। इदम् उत्तमषोडशकं श्राद्धम्, यद् वर्षं यावद् भवति।

**षोडशश्राद्धानि त्रिविधानि**

(१) मलिन ( अधम ) षोडशश्राद्धम्।
(२) मध्यषोडशश्राद्धम्।
(३) उत्तमषोडशश्राद्धं च।

(१) **मलिनषोडशश्राद्धम्**—एतत् षोडशकं श्राद्धं मरणदिनादेव प्रारब्धं भवति। शवप्रस्थानकाले प्रथमं शवस्थाने ( मृत्युस्थाने) एकपिण्डदानं कृत्वा शवप्रस्थानं कर्तव्यम्। ततोऽर्धमार्गेऽथवा ग्रामसीमायां द्वितीयमेकपिण्डदानम्, ततश्चिताया उपरि प्रेतहस्ते तृतीयम्, पुनस्तस्मिन् श्मशाने भूमौ सर्वेभ्यो भूतेभ्यचतुर्थ पिण्ड-दानम्, ततस्तत्रैव परस्थाननिमित्तकं पञ्चमम्, ततश्च अस्थिसञ्चयकाले ( नद्यामस्थिप्रक्षेपे ) षष्ठम् एकपिण्डदानं कुर्यात्। एवं षष्ठपिण्डदानानन्तरं गृहे दशदिनपर्यन्तं दशगात्रार्थं दशपिण्डदानमादाय षोडशमलिनश्राद्धं षोडशाधमश्राद्धं वा ज्ञेयम्। तथैवोक्तं गरुडपुराणे—

मलिनश्राद्धसंज्ञाकाः पूर्वे षोडश काश्यप।
प्रस्थाने चाथार्धपथे चितायां प्रेतहस्तके॥
श्मशाने सर्वभूतेभ्यः पञ्चमं प्रतिवेश्मकम्।
षष्ठं च सञ्चये प्रोक्तं दश पिण्डान् दशाह्निकात्॥[१]

(२) **मध्यषोडशश्राद्धम्**—इदं षोडशकं श्राद्धं तु एकादशाहदिने मण्डपाद् बहिः क्रियते यत् पूर्वोक्तोत्तमषोडशश्राद्धविधिना भवति।

(३) **उत्तमषोडशश्राद्धम्**—इदं षोडशकं श्राद्धं तु पूर्वोक्तमेव। प्रतिमासिकादि-श्राद्धानुसारेण पूर्णं वर्षं यावदिदं समाप्तं भवति। ततश्च पूर्णवर्षदिने सपिण्डनं कृत्वा ब्राह्मणान् भोजयेत्।

**त्रिपक्ष-सपिण्डनमासश्राद्धानि**—मुख्यपक्षे यद्यावश्यककार्यवशाद् त्रिपक्षे सपिण्डनं विधेयं स्यात्, तदा प्रथममासिकश्राद्धं प्रथममासस्थसजातीयतिथौ कृत्वा त्रिपक्षपूरणात् पूर्वदिने द्वितीयमासिकादित्रयोदशमासिकश्राद्धपर्यन्तानि सर्वाणि द्वादशमासिकश्राद्धानि कर्तव्यानि, अथवा त्रिपक्षसपिण्डनदिने पूरके एव मरणसजातीयतिथौ सर्वाणि उक्तमासिकश्राद्धानि सपिण्डनश्राद्धं च कर्तव्यानि। तथा चोक्तं श्राद्धविवेके—

"त्रिपक्षे सपिण्डने मासे प्रथममासिकं कृत्वा त्रिपक्षपूरणात् पूर्वदिने द्वितीय-मासिकादि-त्रयोदशमासिकपर्यन्तानि द्वादशमासिकानि कर्तव्यानि, त्रिपक्षपूरकमरण-तिथिसजातीयतिथौ वा सपिण्डनदिने एव सर्वाणि कर्तव्यानि॥"[२] इति॥

**षष्ठमासे सपिण्डनमासश्राद्धानि**—यथावश्यककार्यकारणवशात् षष्ठे मासे यदि सपिण्डनं विधेयं स्यात्, तदा क्रमशः पञ्चममासपर्यान्तानि श्राद्धानि कृत्वा षष्ठ-

१. ग० पु०, प्रे० क० २५।५०-५१ २. श्रा० वि० पृ० १३

मासिकतिथेः पूर्वदिने ऊनषाण्मासिकादि-दशमासिकानि द्वादशश्राद्धानि कर्तव्यानि। अथवा षष्ठमासिक-मरणसजातीयतिथौ सपिण्डनदिने एव ऊनषाण्मासिकादीनि सर्वाणि श्राद्धानि कृत्वा तत्रैव सपिण्डनं कार्यम्। तथा हि श्राद्धविवेके—

"षष्ठमासे सपिण्डनपक्षे पञ्चसु मासेषु पञ्चमासिकानि मरणतिथिसजातीयतिथौ कृत्वा षाण्मासिकपूरणपूर्वदिने ऊनषाण्मासिकादीनि दशमासिकानि कर्तव्यानि, षष्ठमासपूरक-मरणतिथिसजातीयतिथौ सपिण्डनदिने एव वा ऊनषाण्मासिकादीनि कर्तव्यानि ॥"[1] इति ॥

**नवममासे सपिण्डनमासश्राद्धानि**—यथावश्यककार्यवशाद् नवमे मासे सपिण्डनं यदि विधेयं स्यात्, तदा अष्टममासिकपर्यन्तानि अष्टमासिकादीनि श्राद्धानि कर्तव्यानि। मध्ये यद् ऊनषाण्मसिकमायाति तत् पूर्वोक्तविधिना षण्मासपूरणात् पूर्वदिने एव कर्तव्यम्। ततश्च नवममासपूरणात् पूर्वदिने नवममासिकादीनि सर्वाणि श्राद्धानि कर्तव्यानि। (अधिमाससंपाते तु पूर्वोक्तविधिना द्वादशमासिकेषु एकमासिकाधिकसहितानि कर्तव्यानि) नवममासपूरणदिने च सपिण्डनं विधेयम्। तथैव श्राद्धविवेके—

"नवममासे सपिण्डने अष्टसु मासेष्वष्टमासिकानि कर्तव्यानि। एकाहोनषण्मासिके ऊनषाण्मासिकं कर्तव्यम्। नवममासपूरणपूर्वदिने नवममासिकादीनि ॥"[2] इति।

**शूद्राणां सपिण्डनम्**—शूद्रैस्तु त्रयोदशाहे एव सपिण्डनं कर्तव्यम्। तथा हि—

"शूद्रेण तु त्रयोदशदिने एव सपिण्डनं कर्तव्यमिति विशेषः ॥"[3] इति।

**आशौचादिविघ्नपतिते श्राद्धविधिः**

त्रिपक्षादि-सपिण्डनपक्षे यदि प्रथमादिमासेषु आशौचमापतेत् तर्हि आशौचे व्यतीते सति अपेक्षितमासिकं कृत्वा प्रकृतक्रमेण अग्रिममासेषु अपेक्षितमासिकं कुर्यात्। यदि काचिद् हानिरापतेद् अर्थात् स्वशरीरे गृहे वा कश्चन क्षतादिराशौचादिर्वा भवेत् तर्हि तथैव तत्क्षतिपूरणे आशौचे विगते वा सत्येव मासिकं कृत्वा प्रकृतक्रमेण अग्रिममासिकादि कुर्यात्। तथा चाह श्राद्धविवेके—

"अथ च त्रिपक्षादौ सपिण्डनपक्षे प्रथममासादौ यदि त्वाशौचमापतति तदाऽऽशौचापगमे मासिकं कृत्वाग्रिममासादौ प्रकृतक्रमेण मासिकं कर्तव्यम्। क्षतं यद्यापतति तदा क्षतान्ते मासिकं कृत्वाऽग्रे प्रकृतक्रमेण कर्तव्यम् ॥"[4] इति।

**उपद्रवे जाते मृतदिनविस्मृते वा एकोद्दिष्टमासिकश्राद्धम्**

यदि राष्ट्रादिकृतोपद्रवे मृतदिनविस्मरणे वा मृतदिने श्राद्धं न कृतं स्यात् तर्हि मासिकानाम् एकोद्दिष्टरूपत्वाद् आपतितमासिकानि एकादश्यां कृत्वा प्रकृतक्रमेण मासिकादि कुर्यात्। तथा प्रोक्तं श्रद्धविवेके—

---

१. श्रा० वि० पृ० १४ २. श्रा० वि० पृ० १४

३. (श्रा० वि० पृ० १४) ४. (श्रा० वि०, पृ० १७)

"यदि राष्ट्राद्युपद्रवरूपविघ्नेन दिनविस्मरणादिना वा क्षयाहे श्राद्धं न कृतम्, तदा एकादश्यां पतितमासिकानि कृत्वाऽग्रे प्रकृतक्रमेण मासिकं कर्तव्यम्, मासिकस्यैकोद्दिष्टरूपत्वात्। एकोद्दिष्टस्य च कर्तव्यतायाम्—

श्राद्धविघ्ने समुत्पन्ने क्षयाहेऽविदिते तथा।
एकादश्यां प्रकुर्वीत कृष्णपक्षे विशेषतः।। इति वाक्यं प्रमाणम्।।"

इति।

**सपिण्डीकरणे विशेषः** —

मृतस्य वर्षे पूर्णे सति पूर्णवर्ष-तिथौ सर्ववर्णैः विधिपूर्वकं सपिण्डनं कर्तव्यम्। सर्ववर्णेषु यदि अन्यथोत्पन्ना (पतिभिन्नेनोत्पन्ना) पुत्री मृता स्यात्, तर्हि तस्याः सपिण्डनं स्त्रीसपिण्डनवत् (मातृसपिण्डनवत्) कार्यम्। यथा च मातुः सपिण्डनं मातामहादिभिः, पितुश्च पितामहादिभिः सह भवति। यदि यस्याः स्त्रियाः पुत्रः पतिश्चोभयौ न स्याताम्, तर्हि तस्याः सपिण्डनं कश्चित् सपिण्डो वृद्धजनोऽथवा देवरः कुर्यात्। यदि देवरादिरपि न स्यात् तर्हि अन्येन केनचिदपि स्ववर्गीयजनेन तस्या एकोद्दिष्टं कार्यम्, सपिण्डनं तु भर्त्रा सह विधेयम्।

यद्यज्ञानाद् विघ्नपाताद् वा तस्याः सपिण्डनं न जातं स्यात् तर्हि पूर्वोक्तं नवकं षोडशश्राद्धं कारयेत्।

पुत्रः पितुः सपिण्डनं कुर्यात्, पुत्रस्य सपिण्डनं पिता न कुर्यात्। किन्तु अतिस्नेहात् पितापि पुत्रस्य विशिष्टं सपिण्डनं कर्तुं शक्नोत्येव। तथा चोक्तं गरुडपुराणे—

सपिण्डीकरणं कार्यं पूर्णाब्दे नैव संशयः।
विधिं प्राप्य नरः कुर्याच्छूद्रस्य च तथैव हि।।
अन्यथा तु सुता जाता यथावर्णचतुष्टये।
ते तु स्त्रीभिर्नियोक्तव्याः सपिण्डीकरणे तथा।।
मातामहैः समं मातुः पितुः समं पितामहैः।
सपिण्डीकरणं कुर्यादिति तार्क्ष्य मतं मम।।
पुत्रो नास्ति न भर्ता च स्त्रीणां तार्क्ष्य सपिण्डनम्।
कारयेत् समये वृद्धः सपिण्डी वाऽथ देवरः।।
पतिपुत्रविहीनायां मृतायां तु सपिण्डनम्।
एकोद्दिष्टेन दातव्यं परेण सह भर्तृभिः।।
अज्ञानाद् विघ्नतो वापि न कृतं चेत् सपिण्डनम्।
नवकं षोडशश्राद्धं कारयेच्च ततो बुधः।।
पितुः पुत्रेण कर्तव्ये न कुर्वीत पिता सुते।
अतिस्नेहाच्च कर्तव्यं सपिण्डीकरणं शुभम्।।[1] इति।

**मातापित्रोर्जीवितयोः मतामह्यां चापि जीवन्त्यां पत्नीसपिण्डनम्**—कस्यामपि विपत्तौ प्राप्तायां यदि कस्याश्चित् स्त्रिया मरणं स्यात् तदा पितृकार्यं (एकोद्दिष्टसपिण्ड-

१. ग० पु०, प्रे० क २४।३२-३८

नादिकार्यम्) न कदापि त्याज्यम्। यदि माता, पिता तथा पितामही चापि जीवन्त्यः स्युः, तर्हि पत्न्याः सपिण्डनं प्रपितामह्या सह विधेयम्। यतः सुसत्यमिदं यत् पुत्रैरनेकप्रकारेण दत्तं सर्वं पिण्डमेलनेन विना व्यर्थम्।

**मातरि मृतायाम्, पितामह्यां प्रपितामह्यां च जीवन्त्योः, मातामहे चापि जीविते पत्न्याः सपिण्डीकरणम्**—विष्णोरुक्तकथनानन्तरं गरुडः पुनस्तमुवाच—हे जनार्दन, यदि माता मृता स्यात्, किन्तु पितामही प्रपितामही च जीवन्त्यौ स्याताम्, एवं मातामहश्चापि जीवेच्चेत् तर्हि तस्या मातुः पिण्डमेलनं कथं स्यादिति प्रश्ने भगवान् विष्णुरुवाच—एवं सति मम पत्न्या महालक्ष्म्या सह मेलनं ध्रुवं स्यादिति। तथा हि गरुडपुराणे—

विपत्तावपि प्राप्तायां पितृकार्यं त्यजेन्नहि।
अथ मातुर्विपत्तिः स्यात् पितृकार्यं न लुप्यते॥
यत्र माता पिता तिष्ठेज्जीवत्येव पितामही।
सपिण्डनं तदा कुर्यात् प्रपितामह्या सहैव तु॥
सत्यं सत्यं पुनः सत्यं श्रूयतां वचनं मम।
न पिण्डमेलनं येषां दत्तं पुत्रैरनेकधा॥

गरुड उवाच—

अपरं मम सन्देहं कथयस्व जनार्दन।
तत्पुरुषस्य कस्यापि माता पञ्चत्वमागता।
पितामही जीवती च तथा च प्रपितामही।
तद्वन्मातामहश्चैव केनासौ मेल्यते कथम्॥

श्री भगवानुवाच—

शृणु ताक्ष्र्य महाबाहो सपिण्डीकरणं तथा।
मम पत्नी महालक्ष्मी सेव्या स्यान्मेलने ध्रुवम्॥[1] इति।

### अथ आवश्यकश्राद्धकालाः

विष्णुना षट् कालाः श्राद्धविशिष्टा उक्ताः। ते च—

(१) सर्वा अमावास्याः, (२) तिस्रोऽष्टकाः, (३) तिस्रोऽन्वष्टकाः, (४) माघी पूर्णिमा, (५) प्रौष्ठपद्यूर्ध्व–कृष्णत्रयोदशी (भाद्रपदमासानन्तरम् आश्विनकृष्णत्रयोदशी), (६) व्रीहियवपाकौ च।

अत्र अष्टका-पदेन अश्नन्ति (भुञ्जते) ब्राह्मणा यस्यां क्रियायाम्, सा अष्टका (पितृश्राद्धक्रिया) इत्यर्थो बोद्धव्यः। अश भोजने धातोरधिकरणे, ४३६ इष्यशिभ्यां तकन् (३।१४५) इति उणादिसूत्रेण औणादिकस्तकन् प्रत्ययः। (अष्टका पितृदेवत्ये ७।३।४५) इति वार्तिकनिषेधात् प्रत्ययस्थादिति इत्वं न। पितृदेवत्ये-इत्यस्य पितृश्राद्धे-इत्यर्थः। पितरश्च ता देवताश्चेति पितृदेवताः।

---

१. (ग० पु०, प्रे० क० २५।१५–२०)

तदर्थं कर्म पितृदेवत्यम्-देवतान्तात् तादर्थ्ये यत् ( ५।४।२४ ) इति सूत्रेण यत् । अतोऽष्टकापदेन पितृश्राद्धक्रिया गृह्यते, योगरूढत्वात् तन्नाम्ना विशेषश्राद्धं च ।

एतेषु षट्कालेषु यः श्राद्धं न करोति स नरकं प्राप्नोति । तथा च प्रोक्तं श्राद्धविवेके—

"अथावश्यकश्राद्धकालाः । तत्र विष्णुः—अमावास्यास्तिस्रोऽष्टकास्तिस्रोऽन्वष्टका माघी प्रौष्ठपद्यूर्ध्वकृष्णत्रयोदशी व्रीहियवपाकौ चेति ।

एतांस्तु श्राद्धकालान् वै नित्यानाह प्रजापतिः ।
श्राद्धमेतेष्वकुर्वाणो नरकं प्रतिपद्यते ॥"[1]

**अमावास्याः**—तत्र आवश्यकश्राद्धकालेषु केवलम् 'अमावास्याः' इति कथनेन ज्ञायते यद् अमावास्या-तिथिश्राद्धं केवलम् 'निरग्नीनां ( गृहस्थानाम् ) कृते एव, नाग्निहोतॄणाम् । तेन साग्निकानां चन्द्रक्षयो न युक्तः । यस्मिन् दिनेऽपराह्णे अमावास्या स्यात् तद्दिने एव श्राद्धं करणीयम् । यदि दिनद्वये क्रमशः अमावास्या स्यात् तर्हि विनिगमकाभावात् प्रथमदिने एव श्राद्धं विधेयम् । यदि दिनद्वयेऽपि अपराह्णे ऽमावास्या न स्यात् तर्हि मुख्यकालाभावात् प्रथमदिने उत्तरदिनेऽपि मध्याह्ने यथेच्छं श्राद्धं कार्यम् । मलमासेऽपि अमावास्यायाम् आवश्यकं श्राद्धं कुर्यात् । तथा हि श्राद्धविवेके—

"**अमावास्याः**—इत्यनेन केवलाया अमावास्याया विधानादमावास्यामात्रं निरग्नीनामावश्यकः श्राद्धकाल इति प्रतिपादितम् । तेनाग्निमतामिन्दुक्षयो निमित्तान्तरं तत्र । तेषामिन्दुक्षयापेक्षया तद्व्यवस्थापकानि बहूनि वाक्यानि तत्रोपयुक्तानि ।

अमावास्यायां तु यस्मिन् दिने अपराह्णेऽमावास्या-लाभस्तस्मिन्नेव दिने श्राद्धम् । उभयदिने त्वपराह्णेऽमावास्या-लाभे प्रथमदिने श्राद्धम् । प्रथमप्राप्तत्यागस्यान्याय्यत्वात् । उभयदिने त्वपराह्णेऽमावास्याया अलाभे उत्तरदिने मध्याह्नेऽपि श्राद्धं कर्तव्यम् । मुख्यकालाभावात् । अविशेषान्मलमासामावास्यायामप्यावश्यकं श्राद्धं कर्तव्यम् ॥"[2] इति ।

**तिस्रोऽष्टकाः**—पौष-माघ-फाल्गुनमासत्रयस्य कृष्णपक्षीया अष्टम्य एव अष्टकात्रयम् । एतास्वष्टमीषु अपूप-मांस-शाकानि श्राद्धद्रव्याणि । तत्र अपूपस्यान्नत्वेन तृप्तिक्षमत्वात् तस्यैव सर्वास्वष्टमीषु मुख्यत्वम् । केवलं मांसशाकयोर्यथासंख्यं पौष-माघ-फाल्गुनमासानां मध्ये द्वयोर्मासयोः कृते बोध्यम् । अतो मांसं वर्जयित्वा मासद्वयस्य अष्टकाद्वये ओदनादिकमेव श्राद्धद्रव्यम् । अपूपस्य यथासंख्यत्वाभावे पारस्करगृह्यसूत्रमेव प्रमाणम् । तथा च पारस्करगृह्यसूत्रम्—

'ऊर्ध्वमाग्रहायण्यास्तिस्रोऽष्टका ऐन्द्री वैश्वदेवी प्राजापत्या पित्र्याऽप्यपूपमांसशाकैर्यथासंख्यम् ।' अत्र अपूप-मांस-शाकैश्च यथासंख्यम् 'ऐन्द्री, वैश्वदेवी,

---

१. श्रा० वि०, पृ १७ २. श्रा० वि, पृ० १७

प्राजापत्या' इति तिसृष्वेव सम्भवति। पित्र्या तु चतुर्थी अष्टका कथ्यते, या स्वातन्त्र्येणापि अष्टकात्वेन आश्विनकृष्णाष्टमी ज्ञायते। चतुर्थ्या अष्टकायाश्च श्राद्धद्रव्यं शाकमेव। तथा च ब्रह्मपुराणम्—

'वर्षासु मध्ये शाकैश्च चतुर्थ्यामेव सर्वदा ।।' इति।

अत्र वर्षर्तोर्मध्यकथनात् श्रावणमासादनन्तरं भाद्रपदमासस्य कृष्णाष्टम्या एव ग्रहणसम्भावना। तस्मिन् आश्विनकृष्णपक्षेऽष्टम्यनन्तरम् अन्यान्यश्राद्धादिकार्यसम्भवाद् अष्टम्याम् एव अष्टकाश्राद्धं वरम्। अतस्तासु अष्टकासु अपूप–मांस–शाकादीनामप्राप्तौ श्राद्धस्य नित्यत्वाद् द्रव्यान्तरेणपि श्राद्धं करणीयम्। तथैव प्रोक्तं श्राद्धविवेके—

"तिस्रोऽष्टका इति। पौषमाघफाल्गुनकृष्णाष्टम्यः। तासु चापूपमांसशाकानि श्राद्धद्रव्याणि। तत्रापूपस्यान्नरूपतया तस्यैव तृप्तिक्षणतया मुख्यत्वम्। मांसशाकयोस्तूपकरणत्वेनान्वयो यथासंख्यम्। अष्टकाद्वये मुख्यद्रव्यमोदनादिकमेव अत्र पारस्करगृह्यम्—ऊर्ध्वमाग्रहायण्यास्तिस्रोऽष्टका ऐन्द्री, वैश्वदेवी, प्राजापत्या। पित्र्याऽप्यपूपमांसशाकैर्यथासंख्यम्। अत्र तिसृषु यथासंख्यम्। पित्र्याऽपीत्यनेन चतुर्थी अष्टका विधीयते। तत्रापि शाकमुपकरणम्। वर्षासु मध्ये शाकैश्च चतुर्थ्यामेव सर्वदा। वर्षासु मध्ये अपरपक्षस्य भाद्रपदकृष्णपक्षत्वात् तदष्टम्या वर्षामध्यत्वम्। शाकैरिति तस्यां ब्रह्मपुराणे शाकोपकरणविधानात्। एवं च स्वातन्त्र्येणाप्याश्विनकृष्णाष्टम्यामष्टकात्वेन श्राद्धविधानात् तस्मिन् पक्षे दिनान्तरे श्राद्धासम्भवेऽप्यष्टम्याः स्वातन्त्र्येण निमित्तत्वमिति प्रतिपादितम्। एतयैव चतसृष्वपूपमांसशाकासंपत्तौ द्रव्यान्तरेणापि श्राद्धकरणं युक्तम्। श्राद्धस्य नित्यत्वादिति प्रतिभाति।।"[१] इति।

(३) **तिस्रोऽन्वष्टकाः**—या अन्वष्टकास्तिस्रः सन्ति, तास्तु अग्निहोतॄणाम् (साग्निकानाम्) आवश्यकश्राद्धकालाः, न निरग्नीनाम्। सर्वत्र अन्वष्टकाश्राद्ध–विधाने साग्निकानामेव कृते प्रमाणदर्शनात्। तथैवोक्तं श्राद्धविवेके—

"अन्वष्टकासु साग्नीनामावश्यकाः कालाः। अन्वष्टकाश्राद्धविधाने साग्निकर्तृकत्वलिङ्गदर्शनादिति।।"[२] इति।

(४) **माघी पूर्णिमा**—मघानक्षत्रेण युक्ता पूर्णिमा—इति व्युत्पत्तिबलान्माघमासस्य पूर्णिमा गृह्यते। तत्र माघपूर्णिमायाम् अन्वष्टकास्तिस्रो भवन्ति। अत एते साग्नीनाम् आवश्यकश्राद्धकालाः। अपरे आवश्यकश्राद्धकालाः साग्निनिरग्नीत्युभयविषयकाः। तथा श्राद्धविवेके चाह—

"माघी मघायुक्ता माघपूर्णिमा, तत्रैव माघी–शब्दस्य व्युत्पत्तिसिद्धत्वात्। अत्रान्वष्टकास्तिस्रः साग्नीनामावश्यकाः श्राद्धकालाः। अपरः साग्निनिरग्निसाधारण आवश्यकः श्राद्धकालः।"[३] इति।

---

१. श्रा० वि० पृ० १८ २. श्रा० वि० पृ० १८
३. श्रा० वि०, पृ०१८

(५) **प्रौष्ठपद्यू र्ध्वंकृष्णत्रयोदशी**——प्रकृष्ट ओष्ठो यस्येति बहुव्रीहिः । ( ओत्वौष्ठयोः समासे वा १।१।६४ ) वर्तिकेन पररूपम् । प्रोष्ठः=गौः । प्रोष्ठस्य इव पादा यासां ताराणां ता इति बहुव्रीहौ—सुप्रात-सुश्व-सुदिव-शारिकुक्ष-चतुरश्रैणी-पदाऽजपद-प्रोष्ठपदाः (५।४।१२०) सूत्रेण समासान्तोऽच्, पादस्य पद्भावश्च निपात्यते । फल्गुनीप्रोष्ठपदानां च नक्षत्रे (१।२।६०) सूत्रेण बहुत्वम् ।

राधा विशाखा पुष्ये तु सिध्यतिष्यौ श्रविष्ठया ।
समा धनिष्ठाः स्युः प्रोष्ठपदा भाद्रपदाः स्त्रियः ॥[1]

इत्यमरोक्तेः प्रोष्ठपदाः=पूर्वाभाद्रपदास्ताराः (नक्षत्राणि) । प्रोष्ठपदाभिर्युक्तेति—नक्षत्रेण युक्तः कालः ( ४।२।३ ) इत्यण् । टिड्ढेति ङीप् । प्रौष्ठपदी=भाद्रपद-पौर्णमासी । सास्ति अस्मिन् मासे इति-सास्मिन् पौर्णमासीति (४।२।२१) इत्यण् । यस्येति चेति ईकारलोपः । प्रौष्ठपदः=भाद्रपदमास इति ।

अतः प्रौष्ठपद-पदेन भाद्रपदमासो गृह्यते । अतः प्रौष्ठपदनक्षत्रेण (भाद्रपद-नक्षत्रेण) युक्ता पूर्णिमा, प्रौष्ठपदी पूर्णिमा गृह्यते । तत्पूर्णिमानन्तरं कृष्णत्रयोदशी हि आश्विनकृष्णत्रयोदशी एव स्यात् । आश्विनकृष्णपक्षस्यैव श्राद्धनित्यकालत्वाच्च तत्राश्विनकृष्णपक्षे अन्यस्मिन् कस्मिंश्चिद् दिने आशौचादिना बाधसत्त्वेऽपि तत्कृष्णत्रयोदशी आवश्यकश्राद्धकालः । अर्थात् तस्यां त्रयोदश्यामवश्यं श्राद्धं कर्तव्यम् । तथा हि श्राद्धविवेके—

"प्रौष्ठपद्यूर्ध्वकृष्णत्रयोदशी अपरपक्षीया । एतावताश्विन-कृष्णपक्षस्यैव नित्यकालत्वेन तत्र दिनान्तरे आशौचादिना श्राद्धबाधेऽपि त्रयोदश्यामावश्यकं श्राद्धकरणमित्युक्तं भवति ।" इति ।

(६) **व्रीहियवपाकौ**

शरदृतौ ( आश्विनकार्तिकमासयोर्मध्ये ) व्रीहिपाको भवति । वसन्ततौं (चैत्रवैशाखयोर्मध्ये) यवपाको भवति । एवं च व्रीहियवपाककालयोः, अर्थात् शरदि आश्विनमासे तथा वसन्ते चैत्रमासे च श्राद्धमावश्यकम् । तत्र मासद्धयेऽपि क्रमशो व्रीहियवयोरभावे जाते तु पुराणाभ्यामेव व्रीहियवाभ्यां श्राद्धं करणीयम्, तयोरभावे च द्रव्यान्तरेणापि । यथा यज्ञेषु अपेक्षितोपकरणाभावे द्रव्यान्तरं गृह्यते तथैव श्राद्धकर्मसु द्रव्यान्तरप्रयोग इष्ट एव । तथा च नवान्नप्राशनकाले गोभिलगृह्यमाष्ये गृहमेधी-वचनम् 'व्रीहियवाभ्यां शरद्वसन्तयोर्यजेत श्यामाकैर्वनी वर्षासु, आपत्कालेऽन्येन पुराणैर्वा' इति ।

अस्यायम्भावः— शरद्वसन्तयोः ( आश्विनचैत्रयोः ) क्रमशो व्रीहियवाभ्यां यज्ञं कुर्यात्, वनी ( वानप्रस्थाश्रमी ) वर्षतौं सम्भवैः श्यामाकैर्यज्ञं कुर्यात् । किन्तु कस्मिंश्चिद् आपत्काले पुराणाभ्यां व्रीहियवाभ्याम्, पुराणश्यामाकैर्वा यजेत, अथवा तदभावे द्रव्यान्तरेण वा यजेत । एतेनेदमायातं यदपेक्षितद्रव्याभावे द्रव्यान्तरविधानमुपतिष्ठत एवेति । तथा चोक्तं श्राद्धविवेके—

---

१. अम० १।३।२२

"व्रीहियवपाकौ चेति। शरदि वसन्ते च व्रीहियवाभ्यामावश्यकं श्राद्धम्। तत्र च नवव्रीहियवयोरसम्पत्तौ पुराणाभ्यां व्रीहियवाभ्यां तत्र श्राद्धं कर्तव्यम्। तदभावे द्रव्यान्तरेणापि श्राद्धं कर्तव्यमिति। तथा च नवप्राशनकर्मप्रस्तावे गोभिलगृह्यभाष्ये-गृहमेधी व्रीहियवाभ्यां शरद्वसन्तयोर्यजेत श्यामाकैर्वनी वर्षासु, आपत्काले ऽन्येन पुराणैर्वेति वचनात्। अत्र वनी वानप्रस्थ इत्यर्थः। यद्यप्यस्य यागे विधानम्, तथापि श्राद्धेऽपि द्रव्याकांक्षायास्तुल्यतया तदसम्पत्तौ पुराणव्रीहियवविधिरन्यद्रव्यविधिश्चोपतिष्ठत एव॥"[1] इति।

तत्रेदमपि प्रोक्तं श्राद्धविवेके—

"वसिष्ठः—श्रावण्याग्रहायण्योरष्टकासु च पितृभ्यो दद्यात्। श्रावण्याग्रहायण्यौ श्रावणमार्गशीर्षपूर्णिमे श्रवणमृगशिरोयुक्ते एतयोर्निरग्नीनामप्यावश्यकं श्राद्धकरणम्। विशेषाश्रवणात्॥"[2] इति।

उपर्युक्त—वसिष्ठवचनाच्च ज्ञायते यत् श्रवणनक्षत्रेण युक्ता श्रावणी (श्रावणमासपूर्णिमा) पूर्णिमा तथा मृगशिरोनक्षत्रेण युक्ता मार्गशीर्षपूर्णिमा (आग्रहायणी पूर्णिमा) च साग्नीनामावश्यकं श्राद्धकरणम्। माघी पूर्णिमा च साग्नीनामावश्यकं श्राद्धकरणं पूर्वोक्तम्। अमावास्यायां साग्नीनां श्राद्धकरणनिषेधे इन्दुक्षयस्यैव कारणत्वमुक्तम्। तथा च 'एतयोर्निरग्नीनामप्यावश्यकं श्राद्धकरणम्' इत्यत्र अपीत्युक्त्या साग्नीनामिदं पूर्णिमाख्यं श्राद्धद्वयम्। एतेनेदमायातं यदष्टम्यनन्तरं श्रावणी पूर्णिमा, आग्रहायणी पूर्णिमा तथा माघी पूर्णिमा च तिस्रोऽन्वष्टकाः साग्नीनाम् आवश्यकश्राद्धकालाः। तथा च पूर्वोक्तानुसारं पौष-माघ-फाल्गुनमासानां कृष्णाष्टम्यो निरग्नीनां तिस्रोऽष्टका आवश्यक-श्राद्धकालाः। एतच्च सर्वं श्राद्धकल्पे सुव्यक्तम्।

ब्रह्मपुराणेऽप्यावश्यकश्राद्धकालाः प्रोक्ताः।

तद् यथा—

आश्वयुक्कृष्णपक्षे तु श्राद्धं देयं दिने दिने।
त्रिभागहीनं पक्षं वा त्रिभागं त्वर्धमेव वा॥ इति।

अयम्भावः—आश्विनमासस्य कृष्णपक्षे प्रातः मुहूर्तद्वयानन्तरमपराह्णे प्रतिदिनं (प्रत्येकतिथौ) श्राद्धं करणीयम्। कदाचित् तिथिवृद्ध्या षोडशदिनात्मकः पक्षो भवति। अतः षोडशदिनात्मकस्य पक्षस्य चतुर्भागेषु कृतेषु प्रत्येकभागे चत्वारि दिनानि भवन्ति। तत्र प्रतिदिनं श्राद्धस्य करणीयत्वेऽपि विकल्पत्रयं कृत्वा श्राद्धकालस्त्रिविधः प्रोक्तः।

(१) प्रथमः—त्रिभागहीनं पक्षम्।

पक्षस्य प्राथमिक-तृतीयभागं विहाय पञ्चम्यादितिथिषु श्राद्धकालः।

(२) द्वितीयः=त्रिभागम्।

नवमीपर्यन्तं द्विभागं विहाय तृतीयभागमारभ्य दशम्यादितिथिषु श्राद्धकालः।

---

१. श्रा० वि०, पृ० १८ २. श्रा० वि०, पृ० १८

( ३ ) तृतीयः, अर्धमेव वा ।

पक्षार्धमादाय अष्टम्यामग्रिमतिथिषु श्राद्धकालः । अर्थात् पञ्चम्यादितिथिषु, अष्टम्यादितिथिषु, दशम्यादितिथिषु वा आवश्यकश्राद्धकालाः ।

उक्तश्लोकात्मके वचने 'दिने दिने' इत्यस्य प्रतिदिनमिति नार्थो युक्तः । दिनद्वये अपराह्णे एकतिथिसत्तायां सत्यां प्रथमदिने श्राद्धे कृते सति द्वितीयदिने तस्यामेव तिथौ श्राद्धस्याकरणीयत्वात्, तत्तिथौ एव पूर्वदिने श्राद्धस्य कृतत्वात् । अतो 'दिने दिने' इत्यस्य तिथावेवार्थः करणीयः । अथ च तत्र सर्वासु तिथिषु मध्ये चतुर्दश्यां तिथौ पार्वणश्राद्धं न कार्यम्, तस्यां तु अपमृतानां श्राद्धकरणीयत्वात् । तथा चोक्तं मनुना—

कृष्णपक्षे दशम्यादौ वर्जयित्वा चतुर्दशीम् ।
श्राद्धे प्रशस्ताः तिथयो यथैता न तथेतराः ।।[1] इति ।

त्रयोदशीश्राद्धनिन्दा तु काम्यश्राद्धविषयिका । अतस्त्रयोदश्यां श्राद्धविधानं युक्तम्, आश्विनकृष्णपक्षीयतिथिश्राद्धानामावश्यकत्वेन नित्यत्वात् । तथाहि श्राद्धविवेके—

"ननु—

आश्वयुक्कृष्णपक्षे तु श्राद्धं देयं दिने दिने ।
त्रिभागहीनं पक्षं वा त्रिभागं त्वर्द्धमेव वा ।।

दिने दिने प्रतिदिनमित्यर्थः । एवं चापरपक्षीयदिनत्वेन विधानात् तस्मिन् पक्षे दिनपुरस्कारेण श्राद्धस्य प्रतिदिनकर्तव्यत्वं बोधितम् । तथा चापरपक्षे सर्वेषु दिनेष्वपराह्णकाले श्राद्धं कर्तव्यम् । तत्र न तिथिशेषजिज्ञासेति तिथिविशेषे कथितं फलं तत्रापि भवत्येव, श्राद्धस्य वस्तुतस्तत्तत्तिथ्यवच्छिन्नकालिकत्वात् । दिनपुरस्कारेणैव श्राद्धकरणे—

कन्यायाते सवितरि यान्यहानि तु षोडश ।
क्रतुभिस्तानि तुल्यानि तेषु दत्तमथाक्षयम् ।।

इति वाक्ये अह्नां षोडशत्वं संगच्छते । तिथिवृद्ध्यापरपक्षस्य षोडशदिनात्मकत्वसम्भवात् । एवं च त्रयोदश्याममावस्यां चाग्रिमदिनेऽपराह्णकालालाभेऽपि निषिद्धप्रातर्मुहूर्तद्वयातिरिक्तकाले कृतं श्राद्धं तदुभयतिथ्यवच्छिन्नकालश्राद्धेनापि कर्त्रा कर्तव्यम् । दिनत्वेन श्राद्धकरणपुरस्कारात् सर्वस्मिन् दिने तत्पक्षनिमित्तकमेव श्राद्धमायाति । दिने दिने इत्यस्य तिथौ तिथौ इतिव्याख्याने प्रथमं दिनशब्दस्य मुख्यार्थत्यागः, एकस्मिन् दिने श्राद्धयोग्यतिथिद्वयप्राप्तौ पार्वणद्वयप्रसङ्गः । एकस्मिन् दिने यस्यां तिथौ श्राद्धं कृतं तस्यां तिथौ दिनान्तरे श्राद्धकालप्राप्तौ श्राद्धानाचरणम्, तत्तिथ्यवच्छेदेन श्राद्धस्य कृतत्वात् । एवमुभयञ्च न सर्वप्रामाणिकव्यवहारसिद्धमिति दिने दिने इति मुख्यशब्दार्थपरिग्रह एव युक्तः । त्रिभा-

---

१. मनु० ३।२७६

गहीनं पक्षमिति तृतीयभागहीनस्य पक्षस्य विधानात्। तत्र पञ्चमी-षष्ठीप्रभृतिषु श्राद्धविधानम्। त्रिभागमिति तृतीयभागमारभ्य दशमीप्रभृतीत्यर्थः। अर्द्धमेवेति पक्षार्द्धविधानम्। अष्टमीप्रभृतीत्यर्थः। अत्र च पक्षे कल्पचतुष्टयेऽपि चतुर्दशी-त्यागः पार्वणे।

कृष्णपक्षे दशम्यादौ वर्जयित्वा चतुर्दशीम्।
श्राद्धे प्रशस्ताः तिथयो यथैता न तथेतराः[1]॥

इति मनुना चतुर्दशीपार्वणश्राद्धस्य निषेधात्। त्रयोदशीश्राद्धेऽपि यद्यपि निन्दा श्रूयते। तथापि निन्दायाः काम्यश्राद्धविषयत्वात्, आश्वयुक्कृष्णपक्षीय-दिनप्राप्तस्यावश्यकत्वम्, तस्य नित्यत्वादिति त्रयोदशीश्राद्धं कर्तव्यमिति बहुप्रामा-णिकव्यवस्था। 'नेच्छेत् त्रयोदशीश्राद्धं पुत्रवान् यः सुतायुषे' इत्यादि निषेध-वाक्यमलौकिकमिति रत्नाकरः॥'[2] इति।

**चतुर्दश्याम् अपमृतकश्राद्धम्**—आश्विनकृष्णचतुर्दश्यां तु अनशनशस्त्राग्न्या-दिभिरुद्बन्धन-जलनिमज्जन-विषादिभिर्वा अपमृतानां तृप्त्यर्थम् आश्विनकृष्ण-चतुर्दश्यामेव एकोद्दिष्टश्राद्धं वरं स्यात्। तथा च ब्रह्मपुराणवाक्यम्—

प्रायोऽनशनशस्त्राग्नि-विषोद्बन्धनिनां तथा।
चतुर्दश्यां तु कर्तव्यं तृप्त्यर्थमिति निश्चयः॥

इत्यादिवाक्येषु रोगेतर-शस्त्रादिनिमित्तेन मृतानां चतुर्दश्यां श्राद्धं कर्तव्यम्। अर्थाद् रोगैर्मृतानां तु चतुर्दश्यां न श्राद्धम्। अविशेषात् पुंसामिव स्त्रीणामप्य-पमृतानां तथैव श्राद्धविधानम्। प्रकृतितः प्रसवो न कश्चन रोगः। अतः प्रसव-वेदनया मृतानां स्त्रीणामपि चतुर्दश्यामेव एकोद्दिष्टं श्राद्धम्।

युवकानां यत्र कुत्रापि मरणे तेषामपि चतुर्दश्यामेवैकोद्दिष्टं श्राद्धम्। यतो युवावस्थायां मरणं रोगेतरनिमित्तेनैव, न रोगेण, तेषां मरणम् अपमृतकमरण-समानमेव। वायुपुराणे तथा चोक्तम्—

युवानस्तु गृहे यस्य मृतास्तेषां तु दापयेत्।
शस्त्रेण च हता ये वै तेषां दद्याच्चतुर्दशीम्॥ इति।

अत्र गृहेइत्युपलक्षणं विदेशारण्यादीनाम्। अनेन वाक्येन युवेतरावस्था-सम्पन्नानां मरणे न चतुर्दश्यामेकोद्दिष्टं स्यात्, तेषां तु रोगनिमित्तेनैव मृतत्वात्। एतच्चतुर्दशीश्राद्धम् अपमृतानां सपिण्डीकरणानन्तरम् आगमिष्यमाणायाम् आश्विनकृष्णचतुर्दश्याम् एकोद्दिष्टविधिना कर्तव्यम्। तथा च गौडवाक्ये दर्शितम्—

चतुर्दश्यां तु यच्छ्राद्धं सपिण्डीकरणे कृते।
तदेकोद्दिष्टविधिना कर्तव्यं शस्त्रघातिनाम्॥ इति।

अत्र शस्त्रघातोऽस्ति येषां ते शस्त्रघातिनस्तेषां शस्त्रादिहतानामित्यर्थः। अस्यां चतुर्दश्यां एकोद्दिष्टश्राद्धसंकल्पे शस्त्रादिनिमित्तकमरणोल्लेखस्य

---

१. मनु० ३।२७६; २. श्रा० वि०, पृ० १६।

नावश्यकता । शस्त्रादिनिमित्तकमृतानां कृते एव एतच्चतुर्दशीश्राद्धकरणात् । रत्नाकरमतेन युवानः षोडशवर्षवयोभिरारभ्य त्रिंशद्वर्षवयांसि पर्यन्तका विवक्षिताः । तथा च श्राद्धविवेके विवृतम् —

"चतुर्दश्यां शस्त्रादिहतस्यैकोद्दिष्टविधिना श्राद्धम् ।
अत्र—प्रायोऽनशनशस्त्राग्नि-विषोद्बन्धनिनां तथा ।
चतुर्दश्यां तु कर्तव्यं तृप्त्यर्थमिति निश्चयः ॥

इत्यादिब्रह्मपुराणादिवाक्येषु रोगेतरनिमित्तेन मृतानां चतुर्दश्यां श्राद्धं कर्तव्यमिति तात्पर्यम्, आचारानुरोधात् । तेन स्त्रिया अपि प्रसवेन मृतायाश्च-तुर्दश्यामेकोद्दिष्टम् । वायुपुराणे—

युवानस्तु गृहे यस्य मृतास्तेषां तु दापयेत् ।
शस्त्रेण च हता ये वै तेषां दद्याच्चतुर्दशीम् ॥

गृहे इत्युपलक्षणम् । तेन युवदशायां यत्र कुत्रापि मृतानां पित्रादीनां श्राद्धं चतुर्दश्यां कर्तव्यम्; शस्त्रहतानां च श्राद्धं कर्तव्यमित्यर्थः । युवमरणे तु युवदशामृत-त्वमेव प्रयोजकम्' न तु रोगेतरनिमित्तमृतत्वम् । हेतुविशेषानभिधानाद् युवेतराणां रोगेतरनिमित्तत्वं प्रयोजकम् । अत एव युवेतरस्यानुपसर्गहेतुकमरणे चतुर्दश्यां न श्राद्धम्, रोगनिमित्तेन मृतत्वात् । एतच्च श्राद्धमेकोद्दिष्टविधिना, आचारात् ।

चतुर्दश्यां तु यच्छ्राद्धं सपिण्डीकरणे कृते ।
तदेकोद्दिष्टविधिना कर्तव्यं शस्त्रघातिनाम् ॥

इति गौडवाक्यदर्शनाच्च । शस्त्रघात एषामस्तीति शस्त्रघातिनः शस्त्रादि-हतास्तेषामित्यर्थः । स्त्रीणामप्येतदेकोद्दिष्टं पुंस्त्वस्याविवक्षितत्वात् । अत्र च शस्त्रा-दिनिमित्तमृतानां यौवने मृतानाञ्च चतुर्दशीश्राद्धसमयो बोधित इति । शस्त्रघाता-दिना मृतस्यैतद्दिनश्राद्धभागित्वबोधने तात्पर्यात् । एकोद्दिष्टश्राद्धसंकल्पवाक्ये तन्निमित्तकमरणोल्लेखो न प्रयोजकः । वस्तुतः सतामेव निमित्तानामेतच्चतुर्दशी-श्राद्धनिमित्तत्वात् । तथा चाद्याश्विनकृष्णचतुर्दश्याममुकगोत्रस्य पितुरमुकशर्मण एकोद्दिष्टश्राद्धमहं करिष्ये इत्येवं संकल्पः कर्तव्यः । "युवानस्त्वत्र षोडशवर्षवय आरभ्य त्रिंशद्वर्षवयःपर्यन्ता विवक्षिता इति रत्नाकरप्रभृतिनिबन्धः[1] ॥" इति ।

'चतुर्दश्यां तु यच्छाद्धं सपिण्डीकरणे कृते'-इत्याद्युक्तस्य गौडविहितश्लोकस्यायं स्पष्टार्थः—शस्त्रादिहतानां पितॄणां प्रथममासिकादि-षोडशमासिकश्राद्धे निर्वृत्ते सति ( मलमासपाते त्वेकाधिके मलमासनिमित्तके कृतेऽपि ) नारायणबलि-श्राद्धे च कृते सपिण्डीकरणं कार्यम् । ततो वर्षानन्तरं द्वितीयवर्षे एकोद्दिष्टपद्धत्या चतुर्दश्यां एकोद्दिष्टमेव श्राद्धं करणीयम्, न तु पार्वणश्राद्धमिति । श्राद्धकर्ता यदि मृतः स्यात् तदा पौत्रादिभिः पार्वणं विधेयम्, शस्त्रादिहतस्य स्वपितुः पित्रा सपिण्डीकरणे कृते सति तस्य प्रेतत्वविमुक्तत्वात् ।

---

१. श्रा० वि० पृ० १९–२० ।

**अथ पार्वणश्राद्धसमयः**—अस्मिन् आश्विनकृष्णपक्षे चतुर्दश्यां पूर्वोक्तानाम् अपमृतानां केवलम् एकोद्दिष्टश्राद्धं कर्तव्यम्। यद्यपमृता न सन्ति तर्हि पार्वणश्राद्धमप्युचितं प्रतिभाति। त्रयोदश्यां तु पार्वणश्राद्धस्य वैशिष्ट्यमुक्तम्। तथा चाश्विनकृष्णपक्षे प्रत्येकं तिथिषु पार्वणश्राद्धस्य नानाविधानि कामनाविषयकफलानि नानास्मृतिभ्यो निष्कृष्य लिखितानि। इत्थं च पार्वणश्राद्धं काम्यश्राद्धं बोद्धव्यम्। प्रतिपदादितिथिषु तस्येमानि फलानि—

(१) प्रतिपदि धनलाभो लब्धाविनाशश्च।
(२) द्वितीयायां द्विपदाधिपत्यम्।
(३) तृतीयायां सर्वकामप्राप्तिः।
(४) चतुर्थ्याम् आपदामप्राप्तिः।
(५) पञ्चम्यां महालक्ष्मीः।
(६) षष्ठ्यां द्विजकर्तृकपूजनम्।
(७) सप्तम्यां गणाधिपत्यम्।
(८) अष्टम्यां सम्पूर्णर्द्धिसिद्धिः।
(९) नवम्यां स्त्रीविषयकैश्वर्यम्।
(१०) दशम्यां बहुगो-जातीयलाभः।
(११) एकादश्यां बहुब्रह्मवर्चस्विपुत्राः।
(१२) द्वादश्यां सुवर्णरजतम्।
(१३) त्रयोदश्यां जातिश्रैष्ठ्यम्।
(१४) चतुर्दश्यां भूतिः।
(१५) अमावस्यायां प्रतिपदादितिथ्युक्तसर्वफलानि।

तथा च श्राद्धविवेके—

"अत्र पक्षे प्रतिपदादितिथिषु फलानि च नानाविधानि नानास्मृतिषु कथितानि। तेषु पुरुषमात्रकामना-विषयकफलानि निष्कृष्य लिख्यन्ते। तद् यथा—'प्रतिपदि धनलाभो लब्धाविनाशः फलम्' एतदारभ्य अमावस्यायां प्रतिपदादितिथ्युक्तसर्वफलानि॥" इति। इत्यन्तिमफलं यावदुपर्युक्तविधिना सर्वं वर्णितमस्ति।[1]

इदानीं श्राद्धविवेके २१ पृष्ठे आश्विनकृष्णत्रयोदश्यां पार्वणश्राद्धं विवेचितं स्पष्टीक्रियते—

विष्णुना प्रोक्तेन 'प्रौष्ठपद्यूर्ध्वं कृष्णत्रयोदशी' इत्यनेन पार्वणश्राद्धं प्रतिकेवला त्रयोदशी कारणं प्रदर्शितम्। पार्वणश्राद्धं प्रति केवलस्य मघानक्षत्रस्य कारणत्वमुक्तं देवीपुराणे। किन्तु पुत्रवता जनेनैतत् श्राद्धं मघायां न कार्यम्। तद्यथा—

तत्रापि महती पूजा कर्तव्या पितृदेवते।
ऋक्षे पिण्डप्रदानं तु ज्येष्ठपुत्री विवर्जयेत्॥

---

१. श्रा० वि० पृ० २०।

अत्र 'पितृदेवते ऋक्षे' इत्यस्य मघायामित्यर्थः ।

मघात्रयोदश्योर्मिलितयोरपि पार्वणश्राद्धवैशिष्ट्यमुक्तं शङ्खाचार्यैः—

प्रौष्ठपद्यामतीतायां मघायुक्तां त्रयोदशीम् ।
प्राप्य श्राद्धं हि कर्तव्यं मधुना पायसेन च ।। इति ।

तथैव श्रीमहाभारते—

अपि नः स कुले ज्यायान् यो नो दद्यात् त्रयोदशीम् ।
मघायां सर्पिषा युक्तं पायसं दक्षिणायने ।। इति ।

मनुरप्याह—

यत् किञ्चिन् मधुना मिश्रं प्रदद्यात् तु त्रयोदशीम् ।
तदप्यक्षयमेव स्याद् वर्षासु च मघासु च ।।[1] इति ।

अस्यायमर्थः—वर्षाकाले मघानक्षत्रयुक्तायां त्रयोदश्यां पार्वणविधानाद् अक्षयं पुण्यमवाप्यते इति ।

शुक्लपक्षात् कृष्णपक्षं यावत् मासगणना-सिद्धान्तपक्षे भाद्रपदशुक्लपक्षादारभ्य आश्विनकृष्णपक्षं यावद् मासगणनया आश्विनकृष्णपक्षस्यापि वर्षर्तुत्वम् । तथा चोपर्युक्तश्लोके 'वर्षासु च मघासु च' इत्यस्य वर्षाकालीन-मघायुक्तायाम् आश्विनकृष्णत्रयोदश्याम् इत्यर्थो ज्ञेयः ।

वशिष्ठोऽपि—

पिता पितामहश्चैव तथैव प्रपितामहः ।
उपासते सुतं जातं शकुन्ता इव पिप्पलम् ।।
मधुमांसैश्च शाकैश्च पयसा पायसेन च ।
एष नो दास्यति श्राद्धं वर्षासु च मघासु च ।।

ब्रह्मपुराणे—

आश्वयुज्यां तु कृष्णायां त्रयोदश्यां मघासु च ।
प्रावृड्ऋतौ यमः प्रेतान् पितॄंश्चापि यमालयात् ।।
विसर्जयति मानुष्ये कृत्वा शून्यं स्वकं पुरम् ।
क्षुधार्ताः कीर्तयन्तश्च दुष्कृतं तु स्वयं कृतम् ।।
पायसं पुत्रपौत्रेभ्यः काङ्क्षन्तो मधुसंयुतम् ।
तस्मात् तांस्तत्र विधिना तर्पयेत् पायसेन च ।।
मध्वाज्यतिलमिश्रेण तत्र शीतेन चाम्भसा ।
ग्रासमात्रं परगृहाद् व्यक्तं यः प्राप्नुयान्नरः ।।
भिक्षामात्रेण यः प्राणान् संधारयति वा स्वयम् ।
यो वः संवर्धयेद् देहं प्रत्यहं स्वात्मविक्रयात् ।।

---

१. मनु० ३ । २७३ ।

श्राद्धं तेनापि कर्तव्यं तैस्तैर्द्रव्यैः सुसञ्चितैः।
त्रयोदस्यां प्रयत्नेन वर्षासु च मघासु च॥
न स्यात् परतरः कालः श्राद्धेष्वन्यत्र विद्यते।
यत्र साक्षाद्धि पितरो गृह्णन्त्यमृतमक्षयम्॥

**आश्विन-त्रयोदशीवैशिष्ट्यम्**—यत्र केवला त्रयोदशी, केवला मघा वा, मघायुक्ता त्रयोदशी, गजच्छाया त्रयोदशी, व्यतीपातयोगा त्रयोदशी, चन्द्रसूर्य-ग्रहणत्रयोदशी वा पार्वणं-श्राद्धार्थं गृह्यते।

अथात्र आश्विनकृष्णपक्षे (१) केवला त्रयोदशी तथा केवला मघा इति द्वयोः पृथकत्वे सत्यपि तत्कालद्वये पार्वणश्राद्धं कार्यम्।

(२) मघायुक्तायां त्रयोदश्यां तथा द्वयोर्मिलितयोरपि श्राद्धम्।

(३) गजच्छायायां श्राद्धम्। मघानक्षत्रयुक्ते त्रयोदशीदिने यदि हस्तनक्षत्रस्थः सूर्योऽपि स्यात् तदा तस्यास्त्रयोदश्याः 'गजच्छाया' इति नाम।

(४) व्यतीपातयोगेऽपि श्राद्धम्।

(५) चन्द्रसूर्यग्रहणयोरपि श्राद्धं कार्यम्।

अत्र केवलायां त्रयोदश्याम्, मिलितयोः मघात्रयोदश्योः, गजच्छायायां च सपुत्रस्य अपुत्रस्य वा उभयोरधिकारः श्राद्धकरणे। रत्नाकरमतेन 'नेच्छेत् त्रयोदशीश्राद्धं पुत्रवान् यः सुतायुषे' इति पुत्रवते निषेधवाक्यस्य अलौकिकत्वात्। तथा च पुत्रवतोऽपि त्रयोदशीश्राद्धेऽधिकारः। केवलं पुत्रवता केवलायां मघायां पिण्ड-रहितं तु श्राद्धं कर्तव्यम्। सूतके इव, मृतके इव अथवा चन्द्रसूर्यग्रहणे इव च गजच्छायायामपि ब्राह्मणो भोजनं न कुर्यात्।

तथाह श्राद्धविवेके—

"मघात्रयोदश्योर्मिलितयोरमिलितयोर्मघात्रयोदश्योः सूर्यस्य हस्तनक्षत्राव-स्थितौ तृतीयं निमित्तम्। तस्य गजच्छायेति नाम।

तथा च ब्रह्मपुराणे—

योगो मघात्रयोदश्योः कुञ्जरच्छायसंज्ञकः।
भवेन्मघायां संस्थे च शशिन्यर्के करे स्थिते॥ इति।

तत्र च श्राद्धमावश्यकम्।

**तथा च याज्ञवल्क्यः**

व्यतीपातो गजच्छाया ग्रहणं चन्द्रसूर्ययोः।
श्राद्धं प्रति रुचिश्चैते श्राद्धकालाः प्रकीर्तिताः[1]॥

व्यतीपातो ज्योतिश्शास्त्रे प्रसिद्धः, सूर्य/चन्द्रमसोः क्रान्तिसाम्यसमयः पुण्य-कालविशेषः। अत्र च गजच्छायायाश्चन्द्रसूर्यग्रहणस्य चावश्यकश्राद्धकालत्वम्। अत्र केवलायां त्रयोदश्यां मिलितयोर्मघात्रयोदश्योर्गजच्छायायां च सपुत्रापुत्रयोरप्यधि-कारः। पिण्डवत्येव श्राद्धे पुत्रिण आवश्यकश्राद्धनिषेधात्। 'नेच्छेत् त्रयोदशीश्राद्धं

---

१. याज्ञ० आचाराध्याये—२१८।

पुत्रवान् यः सुतायुषे' इत्यादिनिषेधवाक्यमलौकिकमिति रत्नाकरलेखनात् पुत्रवतोऽपि त्रयोदशी श्राद्धाधिकारः। केवलायां मघायां पुत्रवता श्राद्धं पिण्डरहितं कर्तव्यमिति शेषः। गजच्छायाया योगो यावत्कालमवतिष्ठते तावत्कालपर्यन्तं ब्राह्मणेन भोजनं न कर्तव्यम्। तथा ब्रह्मपुराणे—

सूतके मृतके चापि ग्रस्तयोश्चन्द्रसूर्ययोः।
छायायां कुञ्जरस्याथ भुक्त्वा तु नरकं व्रजेत्॥
भुक्त्वा प्रमादाद् विप्रस्तु सम्यक् चान्द्रायणं चरेत्॥ इति।

प्राक् छाये कुञ्जरस्य चेति याज्ञवल्क्यवाक्ये श्राद्धं प्रति निमित्तान्तरमेवोक्तम्। पारस्करः—श्राद्धान्वितः श्राद्धं कुर्याच्छाकेनापि नापरपक्षमतिक्रामेत्॥ इति।[1]

आश्विनकृष्णपक्षीयश्राद्धस्य चाक्षयफलत्वम्। अतस्तत्पक्षे १४० पृष्ठोक्तविधिना पक्षस्य चतुर्भागान् कृत्वा प्रथमादीनां भागानां कस्मिन्नपि भागे श्राद्धारम्भे कृते सति तत्र विघ्नसम्पत्तौ आग्रिमभागश्राद्धं न करणीयमिति चेन्न; तत्पक्षे श्राद्धनित्यत्वे तद्बाधकानुपपत्तेः। तथा चोक्तं श्राद्धविवेके—

"एतत्पक्षीयश्राद्धस्याक्षयफलत्वमपि। तस्मिन् पक्षे कल्पचतुष्टये प्रथमपक्षाद्युपक्रमेण श्राद्धारम्भे कृते तत्र विघ्ने वृत्तोऽग्रिमकल्पो नानुसरणीय इति मतमनादेयम्। नित्यत्वे कल्पान्तरे बाधकन्यायानवतारादिति[2]॥" इति।

**संक्षिप्तः श्राद्धकालनिर्णयः**—यदि कार्यकारणवशाद् आश्विनकृष्णपक्षे श्राद्धकरणाभावः स्यात्, तदा श्राद्धस्य नित्यत्वात् कार्तिक्याम् अमावास्यायां पार्वणश्राद्धमवश्यं कुर्यात्। यदि कदाचित् तदपि त्यक्तं भवेत्, तर्हि महालयस्य कृष्णपक्षेऽवश्यं कार्यम्। तदा चाप्तवाक्यम्—

येयं दीपान्विता राजन् ख्याता पञ्चदशी भुवि।
तस्यां देयं न चेद् दत्तं पितॄणां तु महालये॥ इति।

### सूर्यचन्द्रग्रहणयोः राहुदर्शनेऽपि पार्वणश्राद्धम्

तथा च शातातपः

सर्वस्वेनापि कर्तव्यं श्राद्धं वै राहुदर्शने।
अकुर्वाणस्तु तच्छ्राद्धं पङ्के गौरिव सीदति।
राहुदर्शनदत्तं हि श्राद्धमाचन्द्रतारकम्॥ इति।

अपरं च

नवोदके नवान्ने च गृहप्रच्छादने तथा।
पितरः स्पृहयन्त्यन्तमष्टकासु मघासु च॥
तस्माद् दद्यात् सदा युक्तो विद्वत्सु ब्राह्मणेषु च॥ इति।

---

१. श्रा० वि०, पृ० २१-२२; २. श्रा० वि० पृ० २२।

अयम्भावः—चद्रसूर्यग्रहणसमये, वर्षर्तौ अर्थाद् आर्द्रानक्षत्रस्थे सूर्ये यद्वा नवीने खानितकूपादौ जले समुद्भवे, नवान्ने अर्थात् शरदर्तौ वसन्ते च, नवीने प्रच्छादित-गृहे सम्पन्ने, अष्टकासु अर्थात् पौष-माघ-फाल्गुनमासानाम् अष्टमीषु, मघासु अर्थाद् वर्षाकाले मघानक्षत्रे च पार्वणश्राद्धं कृत्वा विद्वद्ब्राह्मणेभ्यो सदक्षिणदेयं वस्तु दद्यात् ।

**गृहप्रवेशे च आभ्युदयिकं पार्वणश्राद्धम्**

तथा च श्राद्धविवेके—

"गृहप्रवेशस्त्वाभ्युदयिकश्राद्धनिमित्तं प्रवेशे नववेश्मनः-इति वाक्येन विहितम्[१]" ।। इति ।

**नवान्नभक्षणपूर्वकालेऽपि पार्वणश्राद्धम्**—तत्र गृहस्थः शरदि वसन्ते च व्रीहि-यवाभ्याम्, वानप्रस्थस्तु वर्षर्तौ प्राप्तैः श्यामाकैश्च श्राद्धं कुर्यात् । तथा च श्राद्धविवेके—

"अत्र नवान्नभक्षणनिमित्तं च पार्वणश्राद्धं ज्योतिषे प्रतिपादितम् । तत्र च पितृदेवेभ्योऽदत्वा नवान्नभक्षणं निषिद्धमिति नवान्नभक्षणपूर्वकाले आवश्यकं श्राद्धम् । यद्यपि नवानि नानाविधान्यन्नानि भवन्ति, तथापि गृहे नवान्नप्राशननि-मित्तक-नवान्नप्राशनकर्मकथने गृह्यभाष्ये च 'गृहमेधी व्रीहि-यवाभ्यां शरद्वसन्त-र्योयजेत्, श्यामाकैर्वनी वर्षासु' इति लिखितेन वाक्येन षष्टिक-यव-श्यामाकरूपा-न्नसम्भवकाल एव निमित्त[२] ।।" इति ।

**ज्योतिषे भोजराजः**

वृश्चिके पूर्वभागे तु नवान्नं शस्यते बुधैः ।
उत्तरे क्रियमाणं तु धनुष्येव कृतं भवेत् ।।
धनुर्मासे कृतं श्राद्धं पितॄन् नैवोपतिष्ठते ।।
धनुर्मासि कृतं श्राद्धं हैमन्तीषु निशासु च ।
पितरस्तन्न गृह्णन्ति नवान्नामिषकाङ्क्षिणः ।।
शुक्ले पक्षे नवं धान्यं पक्वं ज्ञात्वा सुशोभनम् ।
सुतिथौ सुमुहूर्ते च नवान्नफलभक्षणम् ।।
त्रिजन्मसु त्रयोदश्यां नन्दायां पितृभेऽपि वा ।
श्राद्धं शुक्रदिने नैव कार्यं सन्ततिमिच्छता ।।
चैत्रे पौषे कृष्णपक्षे नवान्नं वर्जयेत् सदा ।
भवेज्जन्मान्तरे रोगी पितॄणां नोपतिष्ठते[३] ।। इति ।

अयम्भावः—वृश्चिकस्थे सूर्ये वृश्चिकस्य पूर्वभागः त्रयोदशांशः । तत्र समये यथा नवान्नभक्षणं वरं तथैव तत्र नवान्नभक्षणात् पूर्वं पार्वणश्राद्धमपि

---

१. श्रा० वि०, पृ० २२; २. श्रा० वि०, पृ० २२-२३ ।
३. श्रा० वि०, पृ० २३ ।

वरम्, आचारात्। वृश्चिकस्य पूर्वभागानन्तरं कृतं श्राद्धं तु धनुषि एव कृतं भवेत्, यद्धि धनुर्मासकृतं हेमन्ततौं च कृतं श्राद्धं पितरो न गृह्णन्ति। त्रयोदश्याम्, नन्दातिथिषु, पितृनक्षत्रे, शुक्रदिने, चैत्रमासे, पौषमासे च पार्वणकर्ता जन्मान्तरे रोगी भवेत्। अत्र चैत्रपौषनिषेधात्, वृश्चिकस्थे सूर्ये नवान्नसम्भवाच्च माघादौ नवान्नभक्षणं श्रेष्ठम्, तद्भक्षणात् पूर्वं च पार्वणश्राद्धं युज्यत एव।

शुक्लपक्षस्य पूर्वाह्णकालः शुक्लपक्षीयश्राद्धस्य सीमा। कृष्णपक्षस्य अपराह्णकालः कृष्णपक्षीयश्राद्धस्य सीमा। श्राद्धं च सीमायामेव कार्यम्, तां सीमां न लङ्घयेत्। सीमाया अपरं नाम रौहिणम्। अर्थात् तद् रौहिणं न लङ्घयेत्। शुक्लपक्षे पूर्वाह्णकाले एव श्राद्धं कुर्यात्, अर्थात् तस्य रौहिणस्य ( पूर्वाह्णकालस्य ) यथा अन्तो न भवेत् तथा पार्वणं श्राद्धं करणीयम्; एवमेव कृष्णपक्षीयश्राद्धम् अपराह्णकाले एव प्रारम्भणीयम्, अतस्तत्काललाभात् पूर्वं नारम्भणीयमित्यर्थः। तदेवोक्तं रौहिणं तु न लङ्घयेदिति।

तथा च वायुपुराणे—

शुक्लपक्षस्य पूर्वाह्णे श्राद्धं कुर्याद् विचक्षणः।
कृष्णपक्षापराह्णे तु रौहिणं तु न लङ्घयेत्[1]॥ इति।

कृष्णपक्षीय—श्राद्धस्य अपराह्णकालः, शुक्लपक्षीयाष्टकाश्राद्धस्य पूर्वाह्णकालो निश्चित एव। अन्वष्टका—श्राद्धं मातृकं श्राद्धं कथ्यते। एवं च अन्वष्टकाश्राद्धस्य पूर्वाह्णकालः, पैतृकश्राद्धस्य अपराह्णकालः। एकोद्दिष्टश्राद्धस्य मध्याह्नकालः, वृद्धिनिमित्तकश्राद्धस्य ( अभ्युदयार्थं नवान्नभक्षणात् पूर्वं पार्वणश्राद्धस्य, गृहप्रवेशादौ वा आभ्युदयिकपार्वणश्राद्धस्य ) च प्रातः कालः समयो निश्चितः।

तथा ब्रह्मपुराणे –

पूर्वाह्णे मातृकं श्राद्धमपराह्णे तु पैतृकम्।
एकोद्दिष्टं तु मध्याह्ने प्रातर्वृद्धिनिमित्तकम्[2]॥

**अथ दिने समयविभागेन श्राद्धकालनिर्णयः**—अत्र सङ्गव—मध्याह्नाऽपराह्ण-सायाह्न-सन्ध्याकालाः प्रदर्शिताः।

अथ दिने पञ्चदश मुहूर्ता भवन्ति, अर्थात् पञ्चदशमुहूर्तात्मकं दिनं भवति। आधुनिकव्यवहारकाले एको मुहूर्तः ४८ क्षण (मिनट) समानः। त्रिमुहूर्तात्मकयोगविभागेन पञ्चदशमुहूर्तानां पञ्चभागा भवन्ति। तत्र प्रथमो भागः (त्रिमुहूर्तात्मकः) संगवः, द्वितीयो भागो मध्याह्नः, तृतीयो भागोऽपराह्णः, चतुर्थो भागः सायाह्नः कथ्यते क्रमशः। ततः परं पञ्चमो भागः सन्ध्याकालं यावद् दिनान्तसमयः। तस्मिन् चतुर्थभागे एव श्राद्धनिषेधात् का कथा पञ्चमभागस्येति।

---

१. श्रा० वि०, पृ० २३; २. श्रा० वि०, पृ० २३।

दिनस्य पञ्चदशमुहूर्तेषु मध्याह्नात् परम् एकमुहूर्तानन्तरम् अर्थात् सप्तममुहूर्तानन्तरम्, योऽष्टमो मुहूर्तः स कुतुपः कथ्यते। तस्मात् कुतुपकालात् सूर्यो मन्दते। स श्राद्धकालोऽनन्तफलदः। कुतुपात् पूर्वं तथा आद्यमुहूर्तद्वयाच्च परं पञ्च मुहूर्ताः, एवं कुतुपात् परं तथा अन्त्यमुहूर्तत्रयाच्च पूर्वं चत्वारो मुहूर्ताः, तथा कुतुपमादाय च समष्टियोगात् दश मुहूर्त्ताः श्राद्धं कर्तुं योग्याः। इत्थं च आद्यौ द्वौ मुहूर्तौ तथा अन्त्यास्त्रयो मुहूर्ताः समष्टियोगात् पञ्च मुहूर्ताः सर्वश्राद्धनिषिद्धकालाः। अर्थात् आद्यमुहूर्तद्वयात् परं अन्तिममुहूर्तत्रयात् पूर्वं पञ्चदशमुहूर्ताः श्राद्धकालाः। तथा च मत्स्यपुराणे—

प्रातः कालो मुहूर्तांस्त्रीन् सङ्गवस्तावदेव तु।
मध्याह्नस्त्रिमुहूर्तः स्यादपराह्णस्ततः परम्॥
सायाह्नस्त्रिमुहूर्तः स्याच्छ्राद्धं तत्र न कारयेत्।
राक्षसी नाम सा बेला गर्हिता सर्वकर्मसु॥
अह्नो मुहूर्ता विख्याता दश पञ्च च सर्वदा।
तत्राष्टमो मुहूर्तो यः स कालः कुतुपः स्मृतः॥
मध्याह्ने सर्वदा यस्मान् मन्दी भवति भास्करः।
तस्मादनन्तफलदस्तत्रारम्भो विशिष्यते॥
ऊर्ध्वं मुहूर्तात् कुतुपाद् यन्मुहूर्तचतुष्टयम्।
मुहूर्तपञ्चकं चैव स्वधाभवनमिष्यते॥[1]

**श्राद्धानामकर्तव्यता**—तत्र पञ्चदशमुहूर्तात्मकदिनस्य त्रिमुहूर्तात्मकयोग-विभागेन विभक्तानां पञ्चभागानाम् अन्त्यपञ्चमभागं वर्जयित्वा शेषेषु चतुर्षु भागेषु आभ्युदयिकादिश्राद्धचतुष्टयं प्राशस्त्येन कर्तव्यम्। यदि कार्यकारणवशाद् एकोद्दिष्टादिश्राद्धेषु मध्याह्नादिकालप्राप्तिर्न स्यात् तदा अनिषिद्धेषु सङ्ग-वादिकालेषु तानि एकोद्दिष्टादिश्राद्धानि कर्तव्यानि। इत्थमेव पार्वणश्राद्धेऽपि यदि अपराह्णकालप्राप्तिर्न स्यात् तदा अनिषेधात् तदपि सङ्गवादिकालेषु कार्यम्। तथा चाह श्राद्धविवेके—

"पञ्चधा विभक्तस्य पञ्चदशमुहूर्तात्मकस्य दिवसस्य प्राप्ताः कालादयः पञ्चभागास्तेष्वाभ्युदयिकादिश्राद्धचतुष्टयं चतुर्षु भागेषु प्रशस्ततमम्। सति सम्भवे तत्रैव कर्तव्यम्। यदा तु प्रशस्तमध्याह्नादिकाललाभ एकोद्दिष्टादौ न भवति तदाऽनिषिद्धसङ्गवादिकालेषु एकोद्दिष्टादिकं कर्तव्यमिति। अत एव पार्वणेऽपि अपरपक्षादावपराह्णालाभे सङ्गवादिष्वपि कर्तव्यता। निषिद्धकाले सर्वेषामनाचरणम्"॥[2] इति।

**रात्रौ, प्रातः कालीन, सूर्योदयमुहूर्तद्वयकाले, सायाह्ने च श्राद्धाकरणीयता**—तथा हि विवेचितं श्राद्धविवेके—

---

१. श्रा० वि; पृ० २३ २. श्रा० वि०, पृ० २३-२४

तथा च मनुना विवृतम्—

राज्ञौ श्राद्धं न कुर्वीत राक्षसी कीर्तिता हि सा ।
सन्ध्योरुभयोश्चैव सूर्ये चैवाचिरोदिते ॥[1] इति ।

विष्णुः—

सन्ध्यारात्र्योर्न कर्तव्यं श्राद्धं खलु विचक्षणैः ।
तयोरपि च कर्तव्यं यदि स्याद् राहुदर्शनम् ॥

स्नानं दानं तथा श्राद्धमनन्तं राहुदर्शने ।
आसुरी रात्रिरन्यत्र तस्मात् तां परिवर्जयेत् ॥

एवं च चन्द्रसूर्यग्रहणकाले तु रात्रौ श्राद्धं कर्तुं शक्यम् । एतेनेदमप्यायातं यद् अन्यत्रापि पुत्रजन्मादौ आवश्यकश्राद्धकरणे सर्वस्मिन् काले श्राद्धं कर्तव्यमिति । श्राद्धेन पितरः सुखिनः सन्त आशिषो ददति । तथा च तेषामाशीर्भिर्जनानां सर्वदा निर्विघ्नं मङ्गलकार्याणि भवन्तीति विवाहादिशुभोत्सवेषु नान्दीश्राद्धादयः सम्पद्यन्त इति निष्कर्षः ॥[2] इति ।

**अथ त्रिरात्राशौचम्**—त्रिरात्राशौचं चतुर्वर्णानामेकविधिनैव भवति । रात्रित्रयं यावदशौचं भवति । द्वितीदिने तृतीयदिने चतुर्थदिने च दशगात्रपिण्डान् दद्यात् तावदेव आशौचं च भवति । एतेन प्रेतः पूर्णशरीराङ्गानि धारयन् गन्तुक्षमः सम्पद्यते । क्षीरयुक्तं यवपिण्डं दद्यात् । चतुर्थदिने एकोद्दिष्टश्राद्धं मासिकश्राद्धं सपिण्डनश्राद्धं च कुर्यात् । तथोपवर्णितं गरुडपुराणे प्रेतकल्पे—

चतुर्णामपि वर्णानामेक एव विधिः स्मृतः ।
यत्र च त्रिरात्राशौचं तावदेवाशुचिर्भवेत् ॥

चतुर्थे च द्वितीयेऽह्नि तृतीये च तथैव च ।
पृथक् पिण्डं प्रदातव्यं यवैश्च क्षीरसंयुतम् ॥
एकोद्दिष्टं तथा श्राद्धं चतुर्थेऽहनि कारयेत् ॥ इति ।[3]

**अथ पञ्चकमृत्यूद्धारः**—धनिष्ठानक्षत्रादारभ्य रेवतीनक्षत्रं यावद् पञ्चकं कथ्यते । तत्राशुभं सर्वदा भवति । अतः सर्वजातिषु पञ्चके मृतकस्य दाहो नैव कर्तव्यः । तत्र दाहे कृते सति जलदानेन जनानामशुभं निश्चितमेव । तदा परिवारेऽतिक्लेशकरे दुःखे समुत्पन्ने सत्यपि कमपि लोकाचारं न कुर्यात् । पञ्चकानन्तरं हि सर्वं मृतदाहाद्यशुभम्, शुभं वा संस्कारादि सम्भवेत् ।

अथवा पञ्चके यदि दाहं कुर्यात् तर्हि विधिपूर्वकमेव । प्रथमम् आद्याहुतीः कुर्यात्, तदनन्तरं च दाहम् । विप्रमन्त्रैर्दाहः कर्तव्यः । कुशानां चतुरः पुत्तलान् मन्त्रद्वारा विधाय कुशैरभिमन्त्रितान् तान् चितायां शवसमीपे उपस्थापितान्

---

१. मनु, ३।२८०   २. श्रा० वि०, पृ० २४   ३. ग० पु०, प्रे० क० २३।१३-१५

दाहयेत् सहैव। आशौचे निवृत्ते सति पञ्चकशान्तिं कुर्याद् विधिना। तथा च गरुडपुराणे प्रेतकल्पे वर्णितम्—

आदौ कृत्वा धनिष्ठां च एतन्नक्षत्रपञ्चकम्।
रेवत्यन्तं तदा ज्ञेयमशुभं सर्वदा भवेत्॥
दाहस्तदा न कर्तव्यः शुभार्थं सर्वजातिषु।
दीयते च जलं तत्र ह्यशुभं जायते नृणाम्॥
लोकयात्रा न कर्तव्या दुःखार्तः स्वजनो यदि।
पञ्चकानन्तरं यस्य कर्तव्यं सर्वतस्तथा॥
पितॄणां गोत्रिणां तेषां संस्कारादिशुभं भवेत्।
गृहे हानिर्भवेत् सत्यं पञ्चके यो मृतो नरः॥
अथवा ऋक्षमध्ये तु दाह्यश्च विधिपूर्वकम्।
क्रियते मानुषाणां तु आद्य आहुतिकारणात्॥
आद्याहुतीः कारयित्वा दाहे वै पुण्यमुत्तमम्।
विप्रैर्नियमतः कार्यो मन्त्रस्तु विधिपूर्वकः॥
शवस्य च समीपे तु क्षिप्यन्ते पुत्तलास्ततः।
दर्भभूयाश्च चत्वारो विप्रमन्त्रैस्तु मन्त्रिताः॥
ततो दाहः प्रकर्तव्यस्तैश्च पुत्तलकैः सह।
सूतकान्ते तदा पुत्रः कुर्याच्छान्तिकमुत्तमम्॥[1] इति।

## अथ कुटीचरस्य विरक्तस्य च श्राद्धविधिः

कुटति कुटिलीभवति ( कुटिले दुर्गमे स्थाने वनादिसमीपे वा कौटिल्येन पर्णादिभिर्विकटाच्छादिता भवति ) इति। कुट कौटिल्ये धातोः कर्तरि—इगुपधज्ञाप्रीकिरः कः ( ३।१।१३५ ) इति कप्रत्ययः। षिद्गौरादिभ्यश्च ( ४।१।४१ ) इति ङीष्। यद्वा—५६९ इगुपधात् कित् ( ४।१२० ) इत्यौणादिक इन् प्रत्ययः स च कित्। (कृदिकारादक्तिनः ४।१।४५) वार्तिकेन ङीष्। यस्येति चेति इकारलोपः कुटी=ग्रामाद् दूरस्थं निवासस्थानम्। तथा चामरः—

वासः कुटी द्वयोः शाला सभा सञ्जवनं त्विदम्
चतुःशालं मुनीनां तु पर्णशालोटजोऽस्त्रियाम्॥[2] इति।

कुटयां विचरतीति चर गतिभक्षणयोः धातोरधिकरणे—चरेष्टः (३।२।१६) इति ट प्रत्ययः। कुटीचरः=संन्यासी त्यागी वेति।

कुटीचरे ( सन्यासिनि ) मृते सति मृतदिनाद् एकादशे दिने शर्करादिसहितेन पक्वान्नेन समन्त्रकं श्राद्धं कुर्यात्। तत्र केवलं द्वादशमासिकानि तथा एकादशाहकृत्यं च कुर्यात्। इदं श्राद्धकर्म गृहाद् दूरस्थे शुद्धदेशे, अथवा नदीतटे अथवा गोष्ठे च कुर्यात्। तत्रैव और्ध्वदेहिक्यां क्रियायां द्विजभोजनं च कारयेत्।

---

१. ग० पु०, प्रे० क० २५।३४-४१; २. अम० २।२।६।

विरक्ते मृतेऽपि एकादशाह एव शर्करादिसहितेन सिद्धान्नेन षोडश मासिकानि एकादशाहकृत्यं च कुर्यात्। यदि तस्मिन् दिने एकादशी तिथिः स्यात् तर्हि तदपरदिने उक्तश्राद्धादि कर्तव्यम्। तत्रैव और्ध्वदैहिक्यां क्रियायां द्विजभोजनं च कारयेत्।

यद्येतौ सहसा अरण्ये विषमस्थाने वा मृतौ स्यातां तर्हि तन्मनुष्यस्य (नान्यजन्तूनाम्) अस्थिसञ्चयं कृत्वा मृतदिने दाहः कर्तव्यः। अशौचं तु मृतदिनादेव भवति। मृतदिनाद् एकादशे दिने एकादशाहादिकृत्यं पूर्वोक्तविधिना कार्यम्। तथा चाह गरुडपुराणे व्यासः—

एकादशे तु दिवसे दद्यात् पिण्डं समन्त्रकम्।
सिद्धान्नं तु प्रदातव्यं शर्करापुष्पगन्धयुक्॥
प्रक्षाल्य द्विजपादौ च कुर्याद् दीपं सधूपकम्।
गृहद्वारसमीपे तु नद्यां गोसुखवासने॥
द्वादश प्रति मासानि श्राद्धान्येकादशानि च।
एवं कुटीचरे चैव विरक्ते सति षोडश॥
मासं प्रति प्रदातव्यं यस्मिन्नहनि जायते।
स मासे प्रथमे ज्ञेयो तिथिरेकादशी न चेत्॥
यत्र स्थाने क्रिया चोर्ध्वा तत्स्थाने भोजयेद् द्विजम्।
तदेव प्रथमं श्राद्धं नो चेच्चैकादशेऽहनि॥
सा तिथिर्मासिके श्राद्धे मृतो यस्मिन् दिने नरः।
एकादशाहादारभ्य घटान्नं जलसंश्रयम्॥
दिने दिने च दातव्यमष्टयामे द्विजोत्तम।
मनुष्यस्य शरीरस्य कुर्यादस्थ्नां तु सञ्चयम्॥
यस्मिन् दिने मृतो वाऽपि अटव्यां विषमेऽपि वा।
यदा तदा भवेद् दाहः सूतकं मृतपूर्वकम्॥
तिलानर्घांस्तथान्नाद्यं गन्धधूपादिकं तथा।
एकादशाहे दातव्यं तस्मिन् शुद्धिः प्रजायते[1]॥ इति।

**अथ नारायणबलिः**—अयं नारायणबलिः केवलमपमृत्युमृतोद्धारणार्थम्। अपमृत्युमृतकाश्चैते गरुडपुराणे प्रेतकल्पे, २९ अध्याये वर्णिताः—

लङ्घनैर्ये मृता विप्रा दंष्ट्रिभिश्चापि घातिताः।
कण्ठग्राहविलग्नानां जीर्णानां तुण्डिघातिभिः॥
विषाग्निशस्त्रविप्रेभ्यो विषूच्या चात्मघातकाः।
यो निमज्जेज्जलेऽगाधे मृतानां शृणु संस्थितिम्॥
पतन्ति निरये वत्स ये च म्लेच्छादिभिर्हताः।
श्वशृगालादिभिर्दष्टा अदृश्या हिमसंकुलाः॥

---

१. ग० पु०, प्रे० क २३।२०-२८।

उल्लङ्घिता मृता ये च महारोगैश्च मोहिताः ।
लोकशप्तास्तथा व्यङ्गा ये च पापान्नपोषिताः ॥
चाण्डालाद्युदकाद्याशीविषविद्युल्लतादिभिः ।
दंष्ट्रिभ्यश्च पशुभ्यश्च वृक्षादिपतनान्मृताः ॥
उदकीसूतिका-शूद्रसूतकादिविदूषिताः ।
तेन पापेन नरकान्मुक्ताः प्रेतत्वभागिनः ॥
न तेषां कारयेच्छ्राद्धं सूतकं नोदकक्रियाम् ।
न मृतानां विधानं तु न कुर्यादूर्ध्वदेहिकम् ॥
तेषां ताक्ष्यं प्रकुर्वीत नारायणबलिक्रियाम् ।
सर्वलोकहितार्थाय शृणु पापभयापहाम् ॥
षण्मासे ब्राह्मणः कुर्यात् त्रिमासे क्षत्रियस्ततः ।
सार्धमासस्य वैश्यस्य सद्यः शूद्रे विधीयते[1] ॥ इति ।

अयमाशयः—अनशनेन, दंष्ट्रिजन्तूनां दन्तघातेन, पाशबन्धनेन, निगलनकर्तॄणां जन्तूनां निगलनेन, विषेण, अग्निदाहेन, शस्त्रेण, विप्रशापात्, विषूचिकया, आत्मघातेन, जलनिमज्जनेन, म्लेच्छघातेन, श्वानदशनेन, शृगालदशनघातेन, गृहान्निर्गतस्य नित्यमदर्शनेन, हिमपातेन, गर्तादिलङ्घनेन, महारोगैः, लोकापवादशापेन, अङ्गानां विकारेण, पापकर्मणा अर्जितान्नभक्षणेन, चाण्डालादीनामन्नजलादिसेवनेन, सर्पविषेण विद्युद्घातेन, वृक्षादिपतनात्, रजोधर्मयुक्ताया नार्या अन्नभक्षणात्, सूतकान्नभक्षणात्, शूद्रदत्तान्नसेवनेन, शूद्रसूतकान्नभक्षणेन सूतकयुक्तगृहान्नसेवनेन, सद्यः प्रसूतायाः स्त्रिया अन्नसेवनेन वा ये मृताः सन्ति ते तदा ह्युक्तानां तेषां घातकानां पापेन पूर्वं नरके पतन्ति, नरकान्मुक्ताः सन्तः प्रेतत्वमाप्नुवन्ति । तेषां श्राद्धम्, आशौचम्, तर्पणम्, और्ध्वदेहिकक्रियाऽपि च न भवन्ति । तेषां प्रेतत्वोद्धाराय केवलं नारायणबलिमेव कुर्यात् । अयं बलिर्ब्राह्मणैः षण्मासे क्षत्रियैस्त्रिमासे वैश्यैः सार्धमासे तथा शूद्रश्च सद्यः क्रियेत ।

एतदनन्तरं सर्वौषधिभिरक्षतैश्च समन्त्रकैः विष्णुमुद्दिश्य विष्णुतर्पणं कुर्यात् ।

तथा चाह व्यासः—

पूर्णं तत्तर्पणं कार्यं मन्त्रैः पौराणवैदिकैः ।
सर्वौषध्यक्षतैर्मन्त्रैर्विष्णुमुद्दिश्य तर्पयेत्[2] ॥ इति ।

ततस्तर्पणानन्तरं स्तुतिं कुर्यात्—

अनादिनिधनो देवः शङ्खचक्रगदाधरः ।
अक्षयः पुण्डरीकाक्ष प्रेतमोक्षप्रदो भव[3] ॥ इति ।

---

१. ग० पु०, प्रे० क० २९।१४–२०; २. ग० पु०, प्रे० क० २६ (२५) ।
३. ग० पु०, प्रे० क० २६।२६ ।

एतदनन्तरं तत्रैव एकादशपिण्डदानम् एकस्याग्रे एकैकक्रमेण कुर्यात् । यथा चोक्तम्—

भक्त्या तत्रैव कुर्वीत श्राद्धान्येकादशैव तु ।
सर्वकर्मविधानेन एकैकाग्रे समाहितः[1] ।। इति ।

श्राद्धकर्तुर्भोजनकालः—ब्राह्मणभोजनानन्तरं योऽवशिष्यते स विघसः, तथा यज्ञान्ते पुरोडाशादिहविष्यादि यदवशिष्यते तदमृतं कथ्यते । एवं श्राद्धान्ते यज्ञान्ते वा तत्कर्ता विघसाशी अमृताशी वा भवेत् ।

तथा मनुस्मृतौ

विघशासी भवेन्नित्यं नित्यं वाऽमृतभोजनम् ।
विघसो भुक्तशेषं तु यज्ञशेषं तथाऽमृतम्[2] ।। इति ।

पितृकर्मानन्तरं काकबलिम्प्रदाय शालिग्रामभोगानन्तरं विप्रादिभिर्बान्धवादिभिरतिथ्यादिभिर्भृत्यादिभिश्चापि भोजने कृते सत्येव श्राद्धकर्ता तस्य पत्नी च भोजनं कुर्यात् ।

तथा हि मनुस्मृतौ—

भुक्तवत्स्वथ विप्रेषु स्वेषु भृत्येषु चैव हि ।
भुञ्जीयातां ततः पश्चादवशिष्टं तु दम्पती ।।
देवानृषीन् मनुष्यांश्च पितॄन् गृह्यांश्च देवताः ।
पूजयित्वा ततः पश्चाद् गृहस्थः शेषभुग् भवेत् ।। इति ।[3]

अथ सिंहावलोकनतः श्राद्धावश्यककालाः—गृहस्थस्यैते सर्वे आवश्यकालाः संक्षेपतस्तत्तन्नामभिर्वर्णिताः श्राद्धविवेके—

एवं चानग्नेरावश्यकश्राद्धनिमित्तानि—

१—अमावास्याः सर्वाः ।
२—चतस्रोऽष्टकाः ।
३—माघीश्रावण्याग्रहायण्यः पूर्णिमास्तिस्रः ।
४-५—आश्विनकृष्णपक्षस्तत्पक्षीयत्रयोदशी ।
६—गजच्छाया ।
७—चन्द्रसूर्यग्रहणम् ।
८—व्रीहियवपाकौ ।
९—तीर्थप्राप्तिः ।
१०—आर्द्रानक्षत्रावस्थितिः सूर्यस्य ।
११—नवान्नभक्षणम् ।
१२—आभ्युदयिकश्राद्धनिमित्तानि च ।

एषु श्राद्धमावश्यकम् । अकरणेऽनिष्टोपदेशादिति[4] । इति ।

---

१. ग० पु०, प्रे० क० २६।२९; २. मनु० ३।२८५ ।
३. मनु० ३।११६-११७; ४. श्रा० वि०, पृ० २४ ।

**श्राद्धे देशप्राशस्त्यम्**—श्राद्धविवेके श्राद्धानाम् आवश्यकसमयवर्णनानन्तरं श्राद्धानां कृते श्राद्धदेशब्राह्मणानां कुशाद्युपकरणानां च प्राशस्त्याप्राशस्त्यवर्णनेषु प्रथमं देशप्राशस्त्यवर्णनं क्रियते।

**अथ श्राद्धे प्रशस्ताप्रशस्तदेशः**—श्राद्धे प्रशस्तो देशः गङ्गातीरादिः। नदीतटम्, वाटिका, गोष्ठादि।

**देशाप्राशस्त्यम्**—निषिद्धस्तु देशः, १—महानद्युत्तरम्, २—मगधदक्षिणद्वादशयोजनावच्छिन्नस्त्रिशङ्कुदेशः, ३—कलिङ्गदेशः, ४—म्लेच्छदेशः, ५—शर्करादिसङ्कीर्णदेशः।

**प्रशस्तब्राह्मणाः**—१–त्रिदण्डी। २–यतिः। ३–आत्मवित् (वेदान्ती), ४–वेदाङ्गवित् (शिक्षा-व्याकरण-निरुक्त-कल्प-ज्योतिष-छन्दः-शास्त्रेषु कस्यचिदपि वेत्ता)। ५–वानप्रस्थः। ६–ब्रह्मचारी। ७–असगोत्रः। ८–साधुगृहस्थः (शुद्धात्मगृहस्थः)। ९–याज्ञिकः। १०–पुराणवेत्ता। ११–श्राद्धकर्मवित्। १२–विष्णु-शिव-सूर्यान्यतमभक्तः। १३–असमानप्रवरः। १४–पितृभक्तः। १५–श्वसुरः। १६–दौहित्रः (कन्यापुत्रः)। १७–गुरुः। १८–आचार्यः। १९–जामाता (कन्यापतिः)। २०–ऋत्विक् (होता)। २१–मातृष्वस्रीयः (मातुः भगिनीपुत्रः)। २२–पितृश्वस्रीयः (पितुः भगिनीपुत्रः)। २३–मातामहः (मातुः पिताः)। २४–मातुलः। २५–भागिनेयः (भगिनीपुत्रः)। २६–अष्टवर्षपरिणीता-सुतः (अष्टवर्षीयोद्वाहितायाः पुत्रः)। २७–पङ्क्तिपावनः (पङ्क्त्या अवहिर्गतः)। २८–गायत्रीमात्रसारोऽपि सदाचारः (गायत्रीमन्त्रजपकर्ता)।

**निषिद्धब्राह्मणाः**—१–द्विर्नग्नः (दुश्चर्मा)। २–शुक्लः (अतिगौरः)। ३–विक्लिधिः (विर्चिचिकायुतः)। ४–शुक्लविक्लिधिः (शुक्लाण्डः शुक्लाण्डकोषो वा)। ५–श्यावदन्तः (जन्मनैव कृष्णदन्तः)। ६–विद्धप्रजननः (छिन्नमेढ्रचर्मा, अर्थाद् यस्य लिङ्गचर्म छिन्नम्)। ७–व्याधितः (रोगी)। ८–व्यङ्गी (विकृताङ्गः)। ९–श्वित्रिः (श्वेतकुष्ठी)। १०–कुष्ठिः। ११–कुनखिः। १२–एवंमित्रम् (उपर्युक्तदोषयुक्तस्य मित्रम्)। १३–शत्रुः (उपरिष्टाद् मित्रमिव)। १४–मूर्खः। १५–ग्रामयाजकः (ग्रामे ग्रामे साधारणहवनादिकारकः)। १६–देवलकः (पण्डा, पुजारी)। १७–चिकित्सकः। १८–क्रयविक्रयोपजीवी। १९–ग्रामप्रेष्यः (ग्रामे ग्रामे प्रेषणीयजनः)। २०–राजप्रेष्यः (राज्ञा प्रेषणीजनो राजपुरुषो वा। २१–गुरुविरोधी। २२–नक्षत्रग्रहसूचकः (केवलं नक्षत्रग्रहाभ्यां पण्डितम्मन्यः)। २३–त्यक्ताग्निः (संन्यासी)। २४–वार्धुषिकः (वृद्ध्याजीवः, सूदेन जीवी)। २५–यक्ष्मी (यक्ष्मरोगी)। २६–पशुपालकः (पशुपालनेन जीविकावहः)। २७–परिवेत्ता (अविवाहिते ज्येष्ठे भ्रातरि सति विवाहितः अनुजः)। २८–परिवित्तिः (विवाहितेऽनुजे अविवाहितो ज्येष्ठभ्राता)। २९–निराकृतिः (अस्वाध्यायः, अवेदपाठी)। ३०–नर्तनशीलः (नतर्कः)। ३१–अवकीर्णी (क्षतव्रतः, स ब्रह्मचारी यस्य मध्य एव व्रतं खण्डितम्)। ३२–वृषलीपतिः (बन्ध्यायाः पतिः, मृतसुतायाः पतिः, रजस्वलाकुमार्याः पतिः। 'बन्ध्या तु

वृषली ज्ञेया वृषली या मृतप्रजा। अपरा वृषली ज्ञेया कुमारी या रजस्वला ॥'। ३३–पौनर्भवः ( द्विवारं विवाहितायाः पुत्रः )। ३४ काणः। ३५–गृहावस्थितव्यभिचारिणीस्त्रीपतिः। ३६–शूद्रशिष्यः। ३७–अभिशस्तः ( लोकापवादग्रस्तः )। ३८–कुण्डः ( पतौ सति जारजः )। ३९–गोलकः ( पतौ मृते जारजः )। ४०–पतितसंसर्गी ( पतितस्य सहवासी )। ४१–अव्रती ( नियमपालनेऽक्षमः )। ४२–क्लीबः। ४३–योनिदोषवान् ( दुष्टयोनिस्त्रीपतिः )। ४४–दिधिषूपतिः ( द्विवारं विवाहितस्त्रीपतिः )। ४५–पुत्रपाठितः ( पुत्रेण पाठितः पिता )। ४६–शूद्रापतिः। ४७ स्त्रीजितः ( स्त्रिया जितः पतिः, स्त्रीवशः )। ४८–द्व्यङ्गुलातीतकर्णः ( द्व्यङ्गुलदूरं गते सति शब्दग्रहत्यागी। ४९–शिल्पजीवी। ५०–स्त्रीयाजकः। ५१–पतितः। ५२–चक्री ( चक्रग्रहीता )। ५३–दुराचारः। ५४–ऐन्द्रजालिकः। ५५–पारदारिकः ( परस्य दारापहर्तृ पुत्रः ) ५६–अजपी ( जपशत्रु) ५७–मातृत्यागी। ५८–पितृत्यागी। ५९–दारत्यागी। ६०–चटकपोषकः ( चटकपक्षिपालकः )। ६१–अकृतविवाहः। ६२–नास्तिकः। ६३–कृपणः। ६४–असत्यवादी। ६५–ऋणहर्ता। ६६–सार्वथा केशशून्यशिरस्कः ( सार्वथा मुण्डी पतितकेशो विकेशो वा। ६७–स्त्रीतुल्यवाक्चेष्टः ( स्त्रीतुल्यभाषकः )। ६८–स्वाश्रमविच्युतः (स्वगृहान्निष्काषितः)। ६९–पर्याहितपयोधाता (अग्न्याधानकर्तुरनुजस्य सकाशात् जीवननिर्वाहको ज्येष्ठभ्राता। 'सोदर्ये तिष्ठति ज्येष्ठे ह्यग्न्याधानं करोति हि। तयोः पर्याहितो ज्येष्ठः, पर्याधाता कनिष्ठकः ॥')। ७०–अग्युत्सादकः ( अग्निना परवस्तुदाही )। ७१–अरण्यदाही। ७२–आवसथदाही। ७३–क्षेत्रस्य दाही। ७४–अगारदाही ( गृहदाही )। ७५–सदा व्यसनशीलः। ७६–रक्तकेशः। ७७–वातजः षण्डः (वायुदोषेण नपुंसकः)। ७८–कीलकः कील इव स्तब्धः, किञ्चित् कर्तुमशक्यः।'षण्ढको वातजः षण्ढः क्लीबोऽप्यथ नपुंसकः। कीलकश्चेति षड्विधोऽयं क्लीबभेदो विभाषितः ॥'[1] )। ७९–शूद्रयाजकः। ८०–वान्ताशी ( वान्तपदार्थस्य भोक्ता )। ८१–राजकारितपापचिह्नाङ्कितः। ८२–वेश्यापतिः। ८३–युद्धाचार्यः ( युद्धशिक्षकः )। ८४–स्रोतोभेदकः ( अम्बुसरणस्य, इन्द्रियस्य, संस्तुतजनस्य वा भेदकः )। ८५–वृक्षारोपणशीलः ( मालिकर्मकर्ता )। ८६–कन्यादूषकः ( कन्यादोषाभिभाषी )। ८७–हिंस्रवृषलवृत्तिः ( घातकः ) ८८–सदा याजकः ( धावं धावं याजनशीलः )। ८९–श्लीपदी। ९०–कूटसाक्षी ( मिथ्या साक्षी )। ९१–गणयाजकः ( सेनायाजकः )। ९२–सूत्रधारादिः (नाटकस्य सूत्रधारादिपात्रविशेषः)। ९३–धर्मकृत्ये भग्नोत्साहः ( धर्मविमुखः )। ९४–हीनातिरिक्ताङ्गः ( हीनाङ्गोऽधिकाङ्गो वा )। ९५–साहसिकः (पापकर्मणा प्राप्तदण्डः) ९६–चौरिकः (चौरः)। ९७–कपटतुलाव्यवहारी। ९८–( आदानप्रदानयोः कपटपरिमापकः )। ९९–आत्मम्भरिः ( केवलमात्मपोषकः )। १००–पुंस्त्वोपघाती ( आत्माभिमानशून्यः पशूनाम् अण्डवहिष्कर्ता वा )। १०१–कृत्याभिचारशीलः ( कुकृत्याभिघातानाम् अभिचाराणां कर्ता )। १०२–दत्तापलापी ( स्वदत्तस्य श्लाघाभिभाषी )। १०३–समयभेदकः ( प्रतिज्ञाया भेदकः )। १०४–पक्षिघाती ( व्याधकर्मशीलः )।

१०५–मीनघाती। १०६–सर्पघाती। १०७–कच्छपघाती। १०८–नानाजन्तुवधासक्तः। १०९–वधबन्धोपजीवी। ११०–शूद्रप्रैष्यः ( शूद्रसेवकः )। १११–मांसविक्रयी। ११२–गरदः ( लम्पटो विषदो वा )। ११३–कुण्डाशी ( जारजवस्तुभोक्ता )। ११४–श्येनक्रीडी ( श्येनपोषकः )। ११५–समुद्रयायी ( समुद्रेण यात्राकर्ता )। ११६–चारणवृत्युपजीवी ( कत्थक-वृत्त्या जीवी, संगीतजीवी )। ११७–मद्यपः। ११८–रसविक्रयी। ११९–केकरः ( एकनेत्रस्य उच्चैः भ्रुकुट्या, अपरनेत्रस्य च नीचैः भ्रुकुट्या ईक्षणकर्ता-ऐंचाताना हिन्दीभाषायाम् )। १२०–धनुष्कर्ता ( धनुर्निर्माता )। १२१–शरकर्ता ( बाणनिर्माता )। १२२–मित्रध्रुक् ( मित्रद्रोही ) १२३–द्यूतवृत्तिः। १२४–भृतकाध्यापितः ( वैतनिककर्मकरेण अध्यापितः ) १२५–पित्रा विवदमानः। १२६–दूतः। १२७–नित्यं याजकः ( नित्यं याजकवृत्तिशीलः )। १२८–काण्डपृष्ठः ( कावचिकः, स्वकुलं परित्यज्य परकुलवासी वा। 'स्वकुलं पृष्ठतः कृत्वा यो वै परकुलं व्रजेत्। तेन दुश्चरितेनासौ काण्डपृष्ठ इति स्मृतः ॥' )। १२९–उन्मत्तः ( धूर्तः, उन्मादरोगी वा )। १३०–गण्डमाली ( गण्डमाला-रोगी )। १३१–वेदनिन्दकः। १३२–उष्ट्रदमकः ( उष्ट्रदमनकर्ता )। १३३–गोदमकः। १३४–दन्तिदमकः ( गजदमकः )। १३५–श्मश्रुकालेऽप्यजातश्मश्रुः। १३६–गलरोगी। १३७–छिन्नाङ्गः। १३८–धर्मविक्रयी ( भिक्षाद्यर्जनाय साधुवेषे जटाजूटवान् )। १३९–अश्वविक्रयी। १४०–गजविक्रयी। १४१–गोविक्रयी। १४२–लवणविक्रयी। १४३–सोमविक्रयी। ( सुराविक्रयी )। १४४–लाक्षाविक्रयी। १४५–चामरविक्रयी। १४६–पूर्वदिने कृतस्त्रीसङ्गमः। १४७–पुत्रिकापतिः ( पुत्तलिका-स्वामी ) १४८–रजस्वलास्त्रीकः। १४९–एककूपोदके ग्रामे संवत्सरवासी ( एककूपोदके ग्रामे जीविकानिर्वाहकः )। १५०–अन्धः। १५१–बधिरः। १५२–पाण्डुरोगी। १५३–दण्डाधिकृतः ( दण्डाधिकारी )। १५४–अशुचिः। १५५–राजद्विष्टः ( राजद्वेष्टा )। १५६–पुरोहितः। १५७–अनूढापुत्रः। १५८–अनूढापतिः। १५९–अनुपासितसन्ध्यः (सन्ध्याकर्महीनः)। १६०–अष्टौ पापरोगिणः, तद्यथा-उन्मादः, त्वग्दोषः, राजयक्ष्मा, श्वासः, मधुमेहः, भगन्दरः, महोदरम्, अश्मरी इत्यष्टौ पापरोगा इति।

**प्रशस्तकुशाः**—दक्षिणदिगवस्थित-दक्षिणावनत-गोकर्णदीर्घाः, समूलाग्रा हरिताः, श्राद्धदिवसे स्वयं प्रातरुत्पाटिताः, पिण्डभूस्तरणे उपमूलं सकृल्लूनाः, श्राद्धकर्तृ-बद्धमुष्टिहस्तमिताः (मुष्टिपर्यन्तका हस्तपरिमाणाः), योग्यदेशस्थाः।

**कुशाभावे तत्प्रतिनिधयः**—मुञ्ज-श्यामाक-दूर्वा-काश-बल्वजाः, तीक्ष्णरोमाणश्च।

**निषिद्धकुशाः**—चिताजाताः, वर्त्मजाताः, यज्ञविनियुक्त-स्तरणविनियुक्तासनविनियुक्त-पिण्डविनियुक्त-पितृतर्पणविनियुक्तामेध्यलिप्तनीलीक्षेत्रजात-कार्पासक्षेत्रजाताः।

**श्राद्धे तिलप्राशस्त्याप्राशस्त्यम्**—

श्यामाः प्रशस्ताः। श्वेता निषिद्धाः।

**निषिद्धजलम्**—दुर्गन्धिजलम्, स्वल्पजलाशयजलम् ( क्षुद्रजलाशयजलम् ), पर्युषितजलम्, अशुचिजलम्, उच्छिष्टजलम्, उच्छिष्टस्पृष्टजलम्, उद्धृतविधिना गृहीतजलम्, अन्त्यजजलाशयजलम्, अनुत्सृष्ट-परखानित-जलाशयजलम् ( शत्रुणा खानिताज्जलाशयात् तच्छत्रुणा व्यवहृतजलम् ) अभोज्यनिपानजलम् ( अभोज्य-निपानजलम् अभोज्यानां पानीयजलम् ), पतितादिकारितखातजलम्, तर्पणे दर्भपत्र-तिल-हेम-रजतान्यतमरहितं जलम् निषिद्धम् ।

**श्राद्धेऽर्घपात्राणि**—सौवर्ण-राजत-ताम्रमय-खड्गपात्र ( गण्डकपात्र )-मणिम-यानि पात्राणि त्रैवर्णिकनिर्मितानि, पलाशादि-यज्ञियवृक्षपात्राणि, पत्रपुटकानि च । एतान्येव परिवेषणे भोजनार्थे च पात्राणि प्रशस्तानि ।

अत एव पलाशस्य पवित्रत्वात् तेनाभिषिञ्चनं वर्णितं वेदे—

ॐ पालाशं भवति तेन ब्राह्मणोऽभिषिञ्चति ब्रह्म वै ।
पलाशो ब्रह्मणे वै नमेतदभिषिञ्चति[1] ।। इति ।

**श्राद्धे भोजने परिवेषणे च निषिद्धपात्राणि:**—सीसमयाऽयोमय-पाषाणमय-भग्न-पात्र-क्षुद्रपात्राणि । दैवे राजतानि भोजने मृन्मयपात्रम् ।

**श्राद्धे गन्धाः**—श्वेतचन्दनाऽगुरु-कृष्णागुरु-गुडुत्वक् ( गुडपुष्पः मधूको वा कुङ्कुम्-( काश्मीरम् ) कर्पूर-पद्मकाष्ठोशीर-( हिन्दीभाषायां पदम्माख, उशीरं वीरणम् )-कुटज-( गिरिमल्लिका=कोरैया ) जटामांस्यः ।

**निषिद्धगन्धाः**—सिन्दुवार-कस्तूरी-सिल्हकादीनि तुरुष्कः=लोहवान निषिद्ध-गन्धाः ।

**श्राद्धे पुष्पाणि विहितानि यानि श्वेतानीति**—पद्म-नीलोत्पल-कुमुद-चम्पक-तिल-तगर-यूथिका-माधवी-( कुन्दविशेषः )-कुन्द-कुब्जका-नवमालिका ( नेवारी हि० )-सेवन्ती=कह्लार ( सायं पुष्पितश्वेतकमलम् )-तुलसीपत्राणि ।

**निषिद्धानीतरश्वेतपुष्पाणि**—अर्क ( मन्दारः )-भाण्डीपीताम्लान-कृमिकेशादि-दुष्टानि (कृमिकीटादिभिमलिनी कृतानि दुष्टान्यर्कपुष्पाणि), उग्रगन्धीनि, रक्तवर्णो-ण्ड्रपुष्प ( रक्तपद्मपुष्प )-रक्तकरवीरश्वेतसुगन्धिकुसुमेतर-कण्टकिवृक्षपुष्प ( रक्तवी-रणश्वेतपुष्पम्, इतरकण्टकिवृक्षपुष्पं च )-चैत्यवृक्षोद्भवपुष्पाणि ( यज्ञस्थानस्य वृक्षपुष्पाणि ) निषिद्धानीति संक्षेपेण वर्णितान्यत्र श्राद्धविमर्शं इति दिक् ।

---

१. ( दण्डके १४ अध्याये २० )

# उपसंहारः

यथा जगन्नियन्तुः परमात्मनः स्वयंप्रकाशस्य सच्चिदानन्दरूपस्य परब्रह्मणः शक्तिस्वरूपमायाद्वारा जगत्कर्तृत्वेन व्यापारवत्त्वं प्रतीयते, तथैव तस्य कार्यस्वरूपस्यास्याखिलचराचरस्य महतो जगतोऽपि व्यापारवत्त्वं स्वाभाविकमेव। यद्गुणक्रियादियुक्तत्वं कर्तुर्भवति, तत्कार्यस्यापि तद्गुणक्रियादिभिः प्रायशः प्रभावितत्वात्। अतोऽखिलजगदात्मा देहधारणानन्तरं स्वपौरुषाभिवृद्धये विविधोपयुक्ते आवश्यकव्यापारे संरतो भवति। किन्तु स जीवात्मा यावत्कालपर्यन्तं शैशवावस्थायामबोधावस्थायां वा निर्बलः सम्भवेत् तावत्कालपर्यन्तं तस्य कर्ता सक्षमं साहाय्यं यथासम्भवं करोति। यदा हि स्वापेक्षितकर्मकृतौ सक्षमः सुबुद्धः सम्पद्यते तदा तस्य कर्ता स्वीयावस्थावशात् क्रमशः स्वं निर्बलं समनुभवन् शुभेच्छुस्तत्कार्यविरतोऽनुलक्ष्यते।

अन्यच्चेदं सर्वेषां विदितमेव यदपेक्षितवस्तुप्राप्त्यर्थं विनिमयविधिः सार्वत्रिको ब्रह्माण्डमण्डले। अर्थात् स्वामीप्सितवस्त्वभावे स्वीयमन्यद् वस्तु परस्मै प्रदाय ततोऽपेक्षितं ग्रहीतुं शक्यते। तथाऽयं विनिमयो विपणौ निरन्तरं क्रियत एव। आवश्यकवस्तुलाभार्थं तत्स्थाने किञ्चित्प्रदानेन विना बलात् तत्प्रहारकः सबलशक्त्या दण्डितः सन्न सुखी सम्पद्यते।

तथैवायं विनिमयविधिः स्वपितॄन् प्रत्यपि निर्धारितो विद्यते। अतः श्राद्धद्वारा श्राद्धीयसोमसत्त्वप्रदानस्थाने तेषामेवाशीर्वादान् पारस्परिकबलसुखसमृद्ध्यर्थं संगृह्य सुखमनुभवेत्। तथा च श्राद्धावश्यकता प्रदर्शिता मनुस्मृतौ—

स्वाध्यायेनार्चयेतर्षीन् होमैर्देवान् यथाविधि।
पितॄन् श्राद्धैश्च नॄनन्नैर्भूतानि बलिकर्मणा॥
कुर्यादहरहः श्राद्धमन्नाद्येनोदकेन वा।
पयोमूलफलैर्वापि पितृभ्यः प्रीतिमावहन्[1]॥ इति।

**याज्ञवल्क्यस्मृतौ च—**

न्यायागतधनस्तत्त्व-ज्ञाननिष्ठोऽतिथिप्रियः।
श्राद्धकृत् सत्यवादी च गृहस्थोऽपि हि मुच्यते[2]॥

नित्यात् परमाणोरुत्पत्तिकारणात् स नित्यो जीवात्मा यत्किञ्चिद्योनिस्थोऽपि श्राद्धीयसत्त्वबलेन सन्तृप्तः सन् वंशजान् सुखिनः समीहते। यस्माच्च वंशजा अपि सर्वथा सुखमनुभवन्ति। जीवात्मनो नित्यत्वं परमाणुसम्भवात्, तत्र च सच्चिदानन्दरूपिणो ब्रह्मणः प्रकाशसत्त्वाच्च सिद्ध्यति। तत्कारणस्य ब्रह्मणो नित्यत्वं सर्वशक्तित्वं सर्वज्ञत्वं चोपवर्णितं ब्रह्मसूत्रशाङ्करभाष्ये। तद् यथा—

---

१. मनु० ३।८१-८२; २. याज्ञ० प्रायश्चित्ताध्याये श्लो० २०५।

"तद् ब्रह्म सर्वज्ञं सर्वशक्ति जगदुत्पत्तिस्थितिलयकारणं वेदान्तशास्त्रादेवावगम्यते। कथम्? समन्वयात्। सर्वेषु हि वेदान्तेषु हि वाक्यानि तात्पर्येणैतस्यार्थस्य प्रतिपादकत्वेन समनुगतानि। 'सदेव सोम्येदमग्र आसीत्', 'एकमेवाद्वितीयम् (छा० ६।२।१)', 'आत्मा वा इदमेक एवाग्र आसीत् (एत० २।१।१।१)', 'तदेतद्ब्रह्मापूर्वमनपरमनन्तरमबाह्यम्', 'अयमात्मा ब्रह्म सर्वानुभूः (बृह० २।५।१९)', 'ब्रह्मैवेदममृतं पुरस्तात् (मुण्ड० २।२।११)' इत्यादीनि[१]।।" इति।

तथा च गीतायाम्—

य एनं वेत्ति हन्तारं यश्चैनं मन्यते हतम्।
उभौ तौ न विजानीतो नायं हन्ति न हन्यते।।

न जायते म्रियते वा कदाचिन्नायं भूत्वा भविता वा न भूयः।
अजो नित्यः शाश्वतोऽयं पुराणो न हन्यते हन्यमाने शरीरे[२]।। इति।

यथा पस्पशाह्निके महाभाष्ये "कथं पुनरिदं भगवतः पाणिनेराचार्यस्य लक्षणं प्रवृत्तम्? सिद्धे शब्दार्थसम्बन्धे। सिद्धे शब्देऽर्थे सम्बन्धे चेति। अथ सिद्धशब्दस्य कः पदार्थः? नित्यपर्यायवाची सिद्धशब्दः। कथं ज्ञायते? यत् कूटस्थेष्वविचालिषु भावेषु वर्तते।" एतन्महर्षिपतञ्जलिवचनैर्यथा शब्दब्रह्मणो नित्यत्वं वर्णितम्, तथैव गीतायामपि तद् यथा—

अक्षरं ब्रह्म परमं स्वभावोऽध्यात्ममुच्यते।
भूतभावोद्भवकरो विसर्गः कर्मसंज्ञितः[३]।। इति।

अन्यच्चापि—

ओमित्येकाक्षरं ब्रह्म व्याहरन् मामनुस्मरन्।
यः प्रयाति त्यजन् देहं स याति परमां गतिम्[४]।। इति।

न्यायदर्शने च परमाणोर्नित्यत्वं तस्योपरि ब्रह्मप्रकाशत्वात् सर्वव्यापकत्वं च सर्वेषां विदुषां नाविदितमेव। महावैज्ञानिकेन डा० एच्० काटनमहोदयेन यत् परमाणावन्तर्गताया विद्युच्छक्तेः स्वरूपं वर्णितं तेनेदं निश्चीयते यत् पुरुषस्त्रीशुक्रशोणितयोः सर्वव्यापकत्वात् परमाणुसत्तावश्यं सत्येति। तत्परमाणुगतविद्युच्छक्तिं मनस्यादायैव जीवात्मनोत्पत्तिप्रकारविधिर्वर्णितो गरुडपुराणे। तद् यथा—

रक्ताधिक्ये भवेन्नारी शुक्राधिक्ये भवेत् पुमान्।
शुक्रशोणितयोः साम्ये गर्भः षण्ढत्वमाप्नुयात्[५]।। इति।

विद्युच्छक्तिमन्तरा उपर्युक्तश्लोकार्थे पुरुषस्त्रीनपुंसकानाम् एतादृशोत्पत्तिप्रकारकारणं नान्यत् किञ्चिद् भवितुमर्हतीति अलौकिक-विद्युच्छक्तिरूप एव जीवात्मा मन्तव्यः।

---

१. ब्र० शा० भाष्ये, अ० १ पा० १ सू० ४; २. गी० २।१६-२०।
३. गी० ८।३; ४. गी० ८।१३; ५. ग० पु०, पें० क० १८।१९।

'उष्णस्पर्शवत् तेजः' इति न्यायदर्शने वर्णनात् शरीरे सर्वत्रोष्णतायाः सत्त्वाच्च शक्तिमच्छुक्रशोणितयोस्तेजः प्रधानस्यैव परमाणोः सम्पन्नत्वम्। यद्यपि शुक्रशोणितियोर्जलाधिक्यमस्ति, अत एव तत्र सोमसत्त्वाधिक्यात् ते शुक्रशोणिते बाह्यविद्युत् सद्य एवाकर्षति, तथापि शुक्रशोणियोरन्तर्गता तैजसविद्युदेव स्थिता विद्यते या व्यापकब्रह्मणः प्रकाशत्वात् ब्रह्मरूपैव ज्ञेया, घटाकाशवत्। अर्थाद् यथा सर्वत्र सत्त्वाद् आकाशः सर्वव्यापकः। घटादौ विद्यमानस्य प्रतीयमानभिन्नस्य खण्डाकाशस्यापि घटे विनष्टे सति पुनः व्यापकरूपत्वं दृश्यत एव, तथैव विद्युतोऽपि व्यापकब्रह्मत्वं सिद्धयति। इत्थं च यथा विद्युदाश्रययोः शुक्रशोणितयोर्जलगुणत्वम्, तथा पृथिव्यप्तेजोवाय्वाकाशानां निर्मितशरीरे सर्वेषां पञ्चमहाभूतानां तत्तद्-गुणा विद्यन्ते।

तथा च वर्णितं गरुडपुराणे २२ अध्याये—

एभिर्भूतैः पीडितस्तु निबद्धः स्नायुबन्धनैः।
त्वचास्थिनाड्यो रोमाणि मांसश्चैवात्र पञ्चमम्॥
एते पञ्च गुणाः प्रोक्ता मया भूमेः खगेश्वर।
यथा पञ्च गुणा आपस्तथा शृणु च काश्यप॥
लाला मूत्रं तथा शुक्रं मज्जा रक्तं च पञ्चमम्।
अपाम् पञ्च गुणाः प्रोक्ता ज्ञातव्यास्ते प्रयत्नतः॥
क्षुधा निद्रा च तृष्णा च आलस्यं कान्तिरेव च।
तेजः पञ्चगुणं तार्क्ष्य प्रोक्तं सर्वत्र योगिभिः॥
धावनं श्वसनं चैव आकुञ्चनप्रसारणम्।
निरोधः पञ्चमः प्रोक्तो वायोः पञ्च गुणाः स्मृताः॥
रागद्वेषौ तथा लज्जा भयं मोहस्तथैव च।
इत्येतत् कथितं तार्क्ष्य वायुजं गुणपञ्चकम्॥
घोषश्छिद्राणि गाम्भीर्यं श्रवणं सर्वसंश्रयः।
आकाशस्य गुणाः पञ्च ज्ञातव्यास्तार्क्ष्य यत्नतः॥
श्रोत्रं त्वक् चक्षुषी जिह्वा नासाबुद्धीन्द्रियाणि च।
पाणिपादौ गुदं वाक् चोपस्थं कर्मेन्द्रियाणि च[1]॥ इति।

इत्याद्युक्तप्रमाणैः स नित्यात्मा ब्रह्मप्रकाशापाताच्चेतनः परमाणुरूपोऽपि बीजवद् विविधे शरीरधारणे समर्थः। यथा पिप्पलादिबीजं सामर्थ्यवद् वृक्षशाखा-पल्लवादियुक्तं महदाकारं सम्पद्यते, तथायं जीवात्मापि यथावरं विविधशरीरं धारयन् तत्तल्लोकेषु विचरति। तथा च मनुस्मृतौ स्पष्टीकृतम्—

पञ्चभ्य एव मात्राभ्यः प्रेत्य दुष्कृतिनां नृणाम्।
शरीरं यातनार्थीयमन्यदुत्पद्यते ध्रुवम्[2]॥ इति।

---

१. गरुडपुराण उत्तरखण्डे २२।३०-३७; २. मनु० १२।१६।

इत्थं च जीवात्मनो नित्यत्वात् कस्माच्चिदपि कर्मानुसारं शरीरान्निर्गतस्यास्य कुत्रापि स्थाने लोके वा स्थितिनिश्चिताच्च तस्य सुखबलसमृद्ध्यर्थं तद्वंशजैः श्राद्धमवश्यं करणीयमिति पितृषु श्रद्धामादाय 'श्राद्धविमर्शः' नामको निबन्धो लिखितो येन मया सुखमनुभवतात्मीयजनेभ्योऽपि सदृशसुखानुभवो भवत्विति समीह्यते ।

अस्मिन् निबन्धे चतुर्दशलोकानां तेजोमयानां सपरिमाणानां वर्णनं वैशद्येन विहितं विद्यते । तत्र लोकेषु नानायन्त्राणि ब्रह्मणः संवलितविद्युच्छक्तिमायाभिर्निमितानि सन्ति यैर्जीवात्मनामवरोहणारोहणे निरन्तरं सम्पद्येते । तथा चोपवर्णितं विद्युन्मालाभिर्नानायन्त्ररचनं वाराहपुराणे—

गोपुरं सूत्तमं तत्र प्रासादद्दशतशोभितम् ।
नानायन्त्रैः समाकीर्णं ज्वालामालासमायुतम्[1] ।। इति ।

एवं नानाप्रमाणैर्जीवात्मनो नित्यत्वमुपवर्ण्यावश्यं श्राद्धकरणीयता जनानामिति स्पष्टीकृत्याऽतो विश्रमे ।

---

१. वाराहपुराणे १६७।३ ।

# श्राद्धविमर्शे समुद्धृतग्रन्थानां सूची


१. ऋग्वेदसंहिता—मैक्समूलर-द्वारा सम्पादिता, चौखम्बा संस्कृत सिरीज आफिस, सन् १९६५ बनारस ।

२. शुक्लयजुर्वेदसंहिता—उव्वटविरचितमन्त्रभाष्यम्, महीधराचार्यकृतवेददीपभाष्यं च । सम्पादकः—जगदीश लाल शास्त्री । मोतीलाल-बनारसीदास, दिल्ली, सन् १९७१ ।

३. ब्रह्मपुराणम्—महर्षिकृष्णद्वैपायनव्यासरचितम । प्रकाशकः—मनसुखराय-मोरः, मुद्रकः—श्री अवधकिशोरसिंहः, गोपालप्रिण्टिङ्ग वर्क्स, १९८।१, कार्नवालिस स्ट्रीट, कलकत्ता । संवत् २०१०, सन् १९५४

४. गरुडपुराणम्—महर्षिकृष्णद्वैपायनव्यासरचितम्, जीवानन्द-विद्यासागर-भट्टाचार्येण संस्कृतम्, कलकत्ता सरस्वतीयन्त्रे मुद्रितम् । संवत् १८९० ।

५. मार्कण्डेयपुराणम्—महर्षिव्यासरचितम् । मुम्बय्यां क्षेमराजश्रीकृष्णदास-श्रेष्ठिना स्वीये 'श्रीवेण्कटेश्वर' मुद्रणयन्त्रालये मुद्रयित्वा प्रकाशितम् । संवत् १९६७, शके १८३२ ।

६. ब्रह्मवैवर्तपुराणम्—महर्षिव्यासरचितम् । जीवानन्द-विद्यासागर-भट्टाचार्येण संस्कृतम् । कलिकातानगरे सरस्वतीयन्त्रे मुद्रितम्, संवत् १८८८ ।

७. मत्स्युपुराणम्—महर्षिव्यासरचितम् । आनन्दाश्रमस्थपण्डितैः संशोधितम् । हरिनारायण आपटे-इत्यनेन पुण्याख्यपत्तने, आनन्दाश्रममुद्रणालये मुद्रयित्वा प्रकाशितम् । शकाब्दः १८२९, ख्रीस्ताब्दः १९०७ ।

८. वाराहपुराणम्—महर्षिव्यासरचितम्, वेङ्कटेश्वर प्रेस, मुम्बई, संवत् १९८० ।

९. महाभारते हरिवंशः—महर्षिव्यासरचितः । मुम्बय्यां श्रीकृष्णदासात्मज-क्षेमराजश्रेष्ठिना स्वीये वेङ्कटेश्वरमुद्रणालये मुद्रितः । संवत् १९६५, शके १८३० ।

१०. कर्ममहापुराणम्—महर्षिव्यासरचितम् । सम्पादकः–आनन्दस्वरूपगुप्तः, एम्. ए., शास्त्री, सर्वभारतीयकाशिराजन्यासः, दुर्गम्–रामनगरम्, वाराणसी। संवत् २०२८, शके १८९३।

११. मनुस्मृतिः—महर्षिमनुरचिता, मन्वर्थमुक्तावलीसहिता । सम्पादकः–प्राणजीवन शर्मा, बम्बई–१९१३।

१२. याज्ञवल्क्यस्मृतिः—महर्षियाज्ञवल्क्यप्रणीता, विज्ञानेश्वरप्रणीतमिताक्षराव्याख्यया विभूषिता। प्रकाशकः–चौखम्बा संस्कृत सिरीज आफिस, वाराणसी। मुद्रकः–विद्याविलास प्रेस, वाराणसी। संवत् २०२४, सन् १९६७।

१३. मुण्डकोपनिषद्
१४. छान्दोग्योपनिषद्
१५. कठोपनिषद्
१६. ऐतरेयब्राह्मणम्
१७. बृहदारण्यकम्
} ब्रह्मसूत्रशाङ्करभाष्यप्रथमाध्यायतो गृहीतानीमानि समुद्धरणानि

१८. ब्रह्मसूत्रम्—महर्षिव्यासकृतम् । उत्तरमीमांसैव वेदान्तदर्शनं ब्रह्मसूत्रं वा कथितम् ।

१९. ब्रह्मसूत्रशाङ्करभाष्यम्—श्रीमच्छङ्कराचार्यप्रणीतम्, अनन्तकृष्णशास्त्रिणा टिप्पणादिभिरूपस्कृतम्, पणशीकरोपाह्वविद्वद्वरलक्ष्मणशर्मतनुजनुषा वासुदेवशर्मणा च संस्कृतम् । मुम्बय्यां तुकारामजावजीश्रेष्ठिभिः स्वीये निर्णयसागरमुद्रणयन्त्रालये मुद्रयित्वा प्रकाशितम्। शके १८३९, सन् १९१७।

२०. ब्रह्मसूत्रशाङ्करभाष्यटीकाभामती—श्रीमद्वाचस्पतिमिश्रकृता, मुम्बय्यां तुकाराम जावजी-श्रेष्ठिभिः स्वीये निर्णयसागरयन्त्रालये मुद्रयित्वा प्रकाशिता। शाके १८३९, सन् १९१७।

विष्णुधर्मोत्तर पुराणम्, तृतीय खण्डम्, भागः १-२। संपादकः–प्रियबाला शाह।

मण्डूकोपनिषद्--श्री शङ्कराचार्यभाष्यसहिता, The Glvss oF आनन्द गिरि, कलकत्ता, सं० १८५०।

धर्मसूत्रम्—शंखलिखितम्। संपा०-पी० वी० काणे।

मिताक्षरा व्याख्या ( याज्ञवल्क्य स्मृति टीका )—

वीरमित्रोदयः—दीपकलिका, संपा०-जे० आर० धारपुरे, बम्बई, १९४२।

२१. पाणिनीयशिक्षा—पणशीकरोपाह्वविद्वद्वरलक्ष्मणशर्मतनुजनुषा वासुदेवशर्मणा टिप्पण्यादिभिः परिष्कृता संशोधिता च भट्टोजिदीक्षितप्रणीता सिद्धान्त कौमुदी तत्स्था। मुम्बय्यां तुकाराम जावजी-श्रेष्ठिभिः मुद्रयित्वा प्राकाश्यं नीता। शकाब्दः १८३७, ख्रीस्ताब्दः १९१५।

२२. महाभाष्यम्—महर्षिपतञ्जलिप्रणीतम्, कैयटव्याख्यासहितम्, पं० कृपाराम-शर्मणा स्वीये तिमिरनाशक-यन्त्रालथे मुद्रयित्वा प्रकाशितं काश्याम्। संवत् १९४६।

२३. कारिकावली ( न्यायदर्शनम् )—सिद्धान्तमुक्तावलीसहितैषा, विश्वनाथ-पञ्चाननभट्टाचार्येण विरचिता, वाक्रेइत्युपनामकगङ्गाधरात्मजेन महा-देवशर्मणा संशोधिता। मुम्बय्यां तुकाराम जावजीइत्यनेन मुद्रयित्वा प्रकाशिता। शाके १८२५, सन् १९०३।

२४. तर्कसंग्रहः—श्रीमदन्नम्भट्टविरचितः, वाक्रेइत्युपाह्वगङ्गाधरभट्टात्मजेन महादेवशर्मणा संस्कृतः। मुम्बय्यां तुकारामजावजीइत्यनेन निर्णय-सागरयन्त्रालये मुद्रयित्वा प्रकाशितः। शाके १८२९ सन् १९०७।

२५. वाक्यपदीयम् ( ब्रह्मकाण्डम् )—श्रीभर्तृहरिणा विरचितम्, नृसिंहापरनाम-धेयेन पं० नारायणदत्तशर्मत्रिपाठिना विरचितया प्रकाशटीकया प्रका-शितम्। मुद्रकः-श्री के० शास्त्री, ज्योतिषप्रकाश, विश्वेश्वरगञ्ज, वनारस सिटी। संवत् १९९४

२६. वैयाकरणसिद्धान्तलघुमञ्जूषा—श्री नागेशभट्टविरचिता, पं० सभापतिश-र्मोपाध्यायविरचितया रत्नप्रभाव्याख्यया टिप्पण्या च संबलिता। गणपतिकृष्णगुर्जरद्वारा श्रीलक्ष्मीनारायणमुद्रणालयः, जतनवरकाशी इत्यत्र मुद्रिता। संवत् १९८६।

२७. वेदान्तपरिभाषा—धर्मराजाध्वरीन्द्रकृता शिवदत्तकृताऽर्थदीपिकाटीका-सहिता। पं० श्रीसुदामामिश्रशास्त्रिणा संशोधिता। मुद्रकः प्रकाशकश्च जयकृष्णदासहरिदासगुप्तः। चौखम्बा संस्कृत सिरीज आफिस, बनारस सिटी, संवत् १९९४।

२८. श्रीमद्भगवद्गीता—परिव्राजकाचार्यश्रीधराचार्यकृतश्रीधरीव्याख्याऽलङ्कृता, पं० कृष्णदत्तशास्त्रिणा सुसम्पादिता। प्रकाशकः–पं० लक्ष्मीनारायण-मिश्रः, लक्ष्मीसंस्कृतपुस्तकालयः, कचौड़ीगली, बनारस। मुद्रकः–श्रीरामदासः, श्रीरामप्रेस, बुलानाला, काशी। संवत् १९९७।

२९. श्रीदुर्गासप्तशती—श्रीमार्कण्डेयपुरास्थेयम्। सम्पादकः-पं० लक्ष्मीदत्त-मालवीयश्चतुर्वेदी। प्रकाशकः–श्रीदुर्गापुस्तक-भण्डारः, खेमामाई, इलाहाबाद। मुद्रकः–श्रीदुर्गाप्रेस, खेमामाई, इलाहाबाद।

३०. शार्ङ्गधरसंहिता–भिषग्वरशार्ङ्गधररचिता। सम्पादकः–पं० दत्तरामश्चतुर्वेदी। मुद्रकः प्रकाशकश्च–खेमराज श्रीकृष्णदासः, बम्बई। स्वीये वेङ्कटेश्वर-यन्त्रालये मुद्रयित्वा प्रकाशिता। संवत् १९६३, शके १८२८।

३१. श्राद्धप्रकाशः—मित्रमिश्ररचितः। सम्पादकः–पद्मप्रसाद भटराई, चौखम्बा संस्कृत सिरीज आफिस, बनारस सिटी। संवत् १९९१।

३२. श्राद्धविवेकः—महामहोपाध्याय-श्रीरुद्रधरकृतः। मुम्बय्यां लक्ष्मी बेङ्कटेश्वर-मुद्रणालये पं० श्रीशिवदुलारेवाजपेयीत्यनेन मुद्रयित्वा प्रकाशितः। संवत् १९७९, शाके १८४४।

३३. तत्त्वार्थवार्तिकम्—भट्टाकलङ्कदेवरचितम्। सम्पादकः–पं० महेन्द्रकुमार जैनः, एम्० ए०, भारतीयज्ञानपीठम्, काशी। संवत् २०१४, सन् १९५७।

३४. मिलिन्दपन्हो—रचयिता नागसेनः। प्रथमशताब्दी, ईशाब्दात् पूर्वम्।

३५. Applied Electricity—by H. Cotton, M. B. E. D, Sc., M. I. E, E. Fifth edition. B. I. Publications, Bombay. 1960.

३६. स्मृतिचन्द्रिका—श्री याज्ञिकदेवभट्टोपाध्यायरचिता, गवर्नमेण्ट ब्राञ्च प्रेस-द्वारा मुद्रिता। १९१८ ई०।

३७. अमरकोषः—श्रीमदमरसिंहविरचितः, मिश्रोपाह्व पं० श्री हरगोविन्दशास्त्रिणा मणिप्रभाहिन्दीव्याख्ययाऽलङ्कृतः। चौखम्बा संस्कृत सिरीज आफिस, बनारस–१। संवत् २०१४, सन् १९२७।

३८. श्रीगुरुग्रन्थसाहिबः—रचयिता जगद्गुरुनानकदेवः। प्रकाशकः–सर्वहिन्द-सिक्खमिशन, अमृतसरः। वृजानन्द प्रेस-द्वारा तथा अमृत प्रिण्टिङ्ग प्रेस, अमृतसरद्वारा च मुद्रितमिदं पुस्तकं हिन्दीभाषायाम्। जुलाई १९३७।

३९. मानव-पत्रिका—प्रथमवर्षम्, दशमसङ्ख्या। सम्पादकः-श्रीलालविहारीमिश्रः। गोयनका-संस्कृतकालेजः, वाराणसी। सन् १९५३।

४०. तर्जुमाकुरानशरीफ—तर्जुमा 'कुरान मजीद' (हिन्दी)। प्रकाशकः-रतन एण्ड कम्पनी, दरीबा कलाँ, देहली-६। मुद्रकः—कुमार फाइन आर्ट प्रेस, ११४३, चाहरहट, दिल्ली—६

४१. मिताक्षरा—श्रीविज्ञानेश्वरप्रणीता। याज्ञवल्क्यस्मृतेर्व्याख्या। प्रकाशकः-चौखम्बा संस्कृत सिरीज आफिस, वाराणसी। मुद्रकः-विद्याविलास प्रेस, वाराणसी, संवत् २०२४, सन् १९६७।